**वरद.खं-** नाचिकेता ब्रवीति- **शान्त इति** ।। पुत्रो मृतो भवेदिति यः सङ्कल्पः, मत्पिता तत्सङ्कल्पात् शान्तिमान्भवेदिति शान्तसङ्कल्पशब्दार्थः ।। ।। १.१.१० ।।

**रा.खं-** एवं यमेनोक्तो नचिकेताः प्रथममेकं वरं तावद् वृणुत इत्याह वेदपुरुषः- **शान्तेति** ।। हे मृत्यो गौतमः मम पिता शान्तसङ्कल्पः मदनिष्टे शान्तः सङ्कल्पः यस्य स तथा, सुमनाः शोभनमनस्कः यथा स्यात्, माऽभि मां प्रति वीतमन्युः- अपगतकोपः, यथा स्यादिति प्रत्येकमन्वेति, त्वत्प्रसृष्टं त्वया प्रेषितं माऽभि मां प्रति प्रतीतः प्रत्यभिज्ञानवान् यथा वदेत्, एतत् एतं वराणां प्रथमं वरं वृणे इत्याह नचिकेता यमं प्रतीत्यर्थः ।। १.१.१० ।।

उपनिषत्

**यथा पुरस्ताद् भविता प्रतीत**
**औद्दालकिरारुणिर्मत्प्रसृष्टः।**
**सुखं रात्रीः शयिता वीतमन्युः**
**त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम् ।। १.१.११ ।।**

**व्यास-** प्रत्यभिज्ञापूर्वं तं वरं ददाति- **यथेति** ।। पुरस्ताद्ग्रामान्तरादागते त्वयि यथा प्रतीतो भवति तथा मत्प्रसृष्टः मया प्रेरितः । उद्दालकस्यापत्यमौद्दालकिः । अरुणाया अपत्यमारुणिः । प्रतीतो भवति ।। १.१.११ ।।

**वामन-** ''यथा पुरस्तात्'' इति यमस्य तद्वरदानवाक्यम् । मया नियुक्तः त्वत्पिता यथा पुरस्तात् शान्तसङ्कल्पः । इह पिता औद्दालकिः । असौ उद्दालकस्य पौत्रः । आरुणिः अरुणापुत्रः ।। १.१.११ ।।

**वादि-** ''औद्दालकिरारुणिः'' इत्यत्र औद्दालकः पिता, अरुणा माता, पूर्वदेहस्य मृतत्वेऽपि अभिनवदेहे त्वयि पुत्रवात्सल्यात् पूर्ववन्मातापितरौ प्रीतिं कुरुतामित्यभिप्रायेण वरदानमिति भावः ।। १.१.११ ।।

**वे.खं-** एवमुक्तो यमस्तथाभवत्वित्याह- **यथेति** ॥ औद्दालकिरुद्दालक एव औद्दालकिः । उद्दालकस्यापत्यं पुमानिति वा । औद्दालकिरारुणिररुणाया अपत्यं पुमानारुणिः तव पिता, मृत्युमुखात्प्रमुक्तं त्वां ददृशिवान् पश्यन्, मत्प्रसृष्टः मत्प्रेरितः वीतमन्युः सन्, पुरस्तात्पूर्वं त्वां प्रति, यथा येन प्रकारेणावर्तत तथा भविता, प्रतीतः प्रत्यभिज्ञावांश्च भविता । रात्रीः सुखं शयिता । अत्र "यथा पुरस्ताद्भविता" इत्यनेन "सुखं रात्रीः शयिता" इत्यनेन च शान्तसङ्कल्पत्वं सुमनस्कत्वञ्चोक्तं भवति ॥ १.१.११ ॥

**वरद.खं-** तथा भवत्वित्याह यमः- **यथा पुरस्तादिति** ॥ औद्दालकिरारुणिस्तव पिता पुरस्तात् पूर्वं त्वां प्रति । यथा येन प्रकारेण अवर्तत । अथ मत्प्रसृष्टः मया प्रेरितः उत्तरत्रापि त्वां प्रति तथा भवितेत्यर्थः ॥ १.१.११ ॥

**रा.खं-** इत्युक्तो यमो वरं तथैव दत्तवानित्याह- **यथेति** ॥ औद्दालकिः उद्दालकस्यापत्यं औद्दालकिः, अरुणाया अपत्यं आरुणिः, "स्त्रीभ्यो ढक्" इति नाश्रितम्, भवान् मत्प्रसृष्टः मत्प्रेषितस्सन् पुरस्तात् ग्रामान्तरादागतो यथा तथा प्रतीतः पित्रा प्रत्यभिज्ञातो भविता भविष्यति । रात्रीः सुखं शयिता शयानो भविता । तव पिता वीतमन्युस्सन् मृत्युमुखात् यममुखात् प्रमुक्तं त्वां ददृशिवान् दृष्टवान् भवेदिति यमः प्रथमं वरं दत्तवानित्यर्थः ॥ १.१.११ ॥

### उपनिषत्

**स्वर्गे लोके न भयं किञ्चनास्ति**
**न तत्र त्वं न जरया बिभेति ।**
**उभे तीर्त्वा अशनायापिपासे**
**शोकातिगो मोदते स्वर्गलोके ॥ १.१.१२ ॥**

**व्यास-** स्वर्ग्याग्निस्वरूपज्ञानलक्षणं द्वितीयं वरं याचितुं हेतुतया तत्फलस्वर्गस्वरूपं निरूपयति- **स्वर्ग इति** ॥ १.१.१२ ॥

**वे.खं-** नचिकेता द्वितीयं वरं प्रार्थयितुमाह- **स्वर्ग इति ॥** हे मृत्यो स्वर्गे लोके भयं किञ्चन किमपि नास्ति । क्षुद्रभयाभावेऽपि मरणं स्यादित्यत उक्तम्- **न तत्र त्वमिति ॥** न तत्र मन्वन्तरकालपर्यन्तं मृत्युरस्तीत्यर्थः । जरया न बिभेति । अशितुमिच्छा अशनाया पातुमिच्छा पिपासा ते उभे तीर्त्वा शोकमतिक्रम्य गच्छतीति शोकातिगः स्वर्गलोके मोदते ॥ १.१.१२ ॥

**वरद.खं-** द्वितीयं वरं प्रार्थयितुं उपोद्धातं रचयति- **स्वर्गे लोक इति ॥** ॥१.१.१२ ॥

**रा.खं-** स्वर्ग्याग्निस्वरूपज्ञानलक्षणं द्वितीयं वरं याचितुं तद्याञ्चायां हेतुतया स्वर्ग्याग्निज्ञानफलस्वर्गशब्दितविष्णुलोकस्वरूपमाह- **स्वर्ग इति ॥** स्वर्गे लोके स्वर्गशब्दिते भगवल्लोके किञ्चन किमपि भयं नास्ति । तत्र लोके त्वं च नासि, शिक्षकस्सन्निति भावः । न जरया बिभेति, तल्लोकं गत इति योज्यम् । अशनायापिपासे उभे तीर्त्वा शोकातिगः शोकानतिक्रान्तस्सन् मोदते सुखमनुभवति । स्वर्गलोक इति पुनरुक्तिरादरार्था । यद्वा, नायं लोकः विष्णुलोकः, किन्तु प्रसिद्धस्वर्गलोक एवेति ज्ञापनाय पुनरुक्तिः । "प्राप्य स्वर्गं तत्र भयातिगः । उष्य मन्वन्तरं कालम्" इत्यादि भाष्योक्तेः ॥१.१.१२॥

### उपनिषत्

**स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो**
**प्रब्रूहि तं श्रद्दधानाय मह्यम् ।**
**स्वर्गलोका अमृतत्वं भजन्ते**
**एतद् द्वितीयेन वृणे वरेण ॥ १.१.१३ ॥**

**व्यास-** स्वर्ग्यं स्वर्गसाधनं अध्येषि जानासि । ज्योतिष्टोमादौ प्रवृत्तस्य रोचकफलं स्वर्गः प्रधानफलं तु मोक्ष इत्याशयवानाह- **स्वर्गेति ॥** एतत् द्वितीयेन वरेण वृणे द्वितीयं वरं वृणे ॥ १.१.१३ ॥

**वामन-** अथ नचिकेताश्च "स्वर्गे लोके" इत्यादिना भगवल्लोकं प्रशस्य "स त्वमग्निम्" इत्यादिना तत्प्रापकमग्निं पृच्छति । स्वयमेव रमते स्वस्मिन्नेव चेति स्वर्नामा नारायणः । तेन गतो वैकुण्ठादिस्तल्लोकः स्वर्गलोक उक्तः । तत्प्रापकत्वाद् विष्णुरेव स्वर्ग्याग्निरुच्यते । किञ्चित्कालं स्वर्गे स्थिता जना अपि स्वर्गलोका उच्यन्ते । "जनो लोकः प्रजा प्रोक्तः" इत्यभिधानात् । ते क्रमात् अमृतत्वं भजन्ते । प्रागेव ज्ञानित्वात् । "तत्र भयातिगः । उष्य मन्वन्तरं कालममृतत्वं भजेत् क्रमात्" इत्यधस्तादुक्तम् ॥ १.१.१२–१३ ॥

**वे.खं-** किं तत इत्यत आह- **स त्वमिति ॥** हे मृत्यो स त्वं मम वरदाता त्वं स्वर्ग्यं पूर्वोक्तमाहात्म्यवत्स्वर्गसाधनीभूतं अग्निं अग्निस्थमग्र्यत्वादग्निनामानं विष्णुम्, अध्येषि अधिकं जानासि, तं श्रद्दधानाय मह्यं प्रब्रूहि सम्यक्कथय इत्येतत् द्वितीयेन वरेण वृणे । न केवलं ज्योतिष्टोमाग्निस्थविष्णुज्ञानिनः स्वर्ग एव फलम् । किन्तु स्वर्गप्राप्त्यनन्तरं मोक्षोऽपीत्याह- **स्वर्गलोका इति ॥** स्वर्गो लोको येषां ते स्वर्गलोकाः स्वर्गे विद्यमाना जना वा अमृतत्वं मोक्षं क्रमाद्भजन्ते ॥ १.१.१३ ॥

**वरद.खं-** स त्वमग्निं स्वर्गमध्येषि इति स्वर्गसाधनमग्निष्टोमयज्ञं जानासीत्यर्थः ॥ १.१.१३ ॥

**रा.खं-** एवं स्वर्ग्याग्निज्ञानफलं निरूप्य स्वर्ग्याग्निं पृच्छति- **स त्वमिति ॥** मृत्यो स त्वं स्वर्ग्यं उक्तरूपस्वर्गसाधनमग्निं अग्निशब्दितेष्टकाचितिस्थ-मग्र्यत्वादिगुणयुक्ततयाऽग्निनामकं हरिम्, अध्येषि जानासि । तं चितिस्थ-मग्निनामकं हरिं श्रद्दधानाय मह्यं ब्रूहि । कुतः ? न हि स्वर्ग्यत्वमात्रेण तद्वचनमावश्यकमित्यत आह- **स्वर्गेति ॥** स्वर्गो लोको येषां ते तथोक्ताः मन्वन्तरं स्वर्लोके स्थास्यन्तः पश्चादमृतत्वं मुक्तिं भजन्ते प्राप्नुवन्ति । एतत् एतं द्वितीयेन वरेण द्वितीयं वरं वृण इत्यर्थः ॥ १.१.१३ ॥

उपनिषत्

**प्र ते ब्रवीमि तदु मे निबोध**
**स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।**
**अनन्तलोकाप्तिमथो प्रतिष्ठां**
**विद्धि त्वमेतं निहितं गुहायाम् ॥ १.१.१४ ॥**

भाष्यम् ।

**अग्र्यत्वादग्निनामाऽसौ नाचिकेताग्निगो हरिः ।**
**लोको विष्णोरनन्तस्य तज्ज्ञानान्नित्य आप्यते ॥**
**प्रतिष्ठा सर्वलोकस्य स विष्णुस्सर्वहृद्गतः ॥ १.१.१४ ॥**

**व्यास-** तत्प्रसिद्धाग्न्यादिमात्रपरत्वप्रतीतिं निवारयन् व्याचष्टे- **अग्र्यत्वादिति ॥** अनन्तस्य लोकः आप्यते येन, अनन्तलोक आप्यते येनेति च सोऽनन्तलोकाप्तिरिति द्वावप्यर्थाविति तत्पदं व्याचष्टे- **लोक इति ॥**
॥ १.१.१४ ॥

**वामन-** ''प्र ते ब्रवीमि'' इति द्वितीयवरदानवाक्यं ''अग्र्यत्वात्'' इत्यादिगतिसारवचनेन व्याख्याति । हे नचिकेतः, ते स्वर्ग्यमग्निं प्रब्रवीमि । तत्स्वरूपं मत्सकाशादेव निबोध । अथो अथ तादृक्स्वर्गिणः कर्मफलभोगसमाप्त्यनन्तरं अनन्तस्य विष्णोः वैकुण्ठादिलोकस्य प्राप्तिं तस्य पुनस्तत्रैव संस्थितिं च ब्रवीमि । एतं स्वर्गापवर्गदं भगवन्तं सर्वेषां हृदयगुहायां निहितं विद्धि इति हृद्गतम् । एवमनन्तो वैकुण्ठादिलोकः, तस्य प्रापकम् । अथो मुक्तामुक्तलोकस्य प्रतिष्ठापकं च ॥ १.१.१४ ॥

**वादि-** ''प्रजानन्'' इत्यत्र नचिकेत इति सम्बुद्धिः । नचिकेता इति हि तस्य नामेति ज्ञेयम् ॥ १.१.१४ ॥

**वे.भा-** ''स त्वमग्निं स्वर्ग्यम्'' इत्यादिद्वितीयप्रश्नपरिहारयोः श्रूयमाणोऽग्निशब्दस्तदन्तर्गतभगवत्पर इत्युक्तम् । तत्केन निमित्तेनेत्याशङ्कां परिहरन् ''अनन्तलोकाप्तिम्'' इति वाक्यं प्रसिद्धाग्निपरमित्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे- **अग्रयत्वादिति** ॥ अग्र्यत्वादग्रे भवत्वादुत्तमत्वादिति यावत् । अग्रशब्दात्सप्तमी समर्थाद्भवार्थे निप्रत्यये रशब्दलोपश्चेति भावः । ''अनन्तलोकाप्तिम्'' इत्यस्यार्थमाह- **लोक इति** ॥ अनन्तस्येत्यनुवादेन विष्णोरिति व्याख्यानम् । अनेन अनन्तस्य लोक आप्यते येन सोऽनन्तलोकाप्तिरिति विग्रह इत्युक्तं भवति । अनन्तो लोक आप्यते येन सोऽनन्तलोकाप्तिरित्यपि विग्रहं दर्शयति- **नित्य इति** ॥ नित्यो लोक इत्यन्वयः । स्वरूपसतस्तस्यानन्तलोकाप्तिसाधनत्वे अतिप्रसङ्गात् तज्ज्ञानादित्युक्तम् । एतेन ''अनन्तलोकाप्तिं स्वर्गलोकप्राप्तिसाधनम्'' इति व्याख्यानमपास्तम् । स्वर्गलोकस्यानन्तलोकत्वाभावात् । स्वर्गलोकोऽपि अनन्तस्य देशतोऽपरिच्छिन्नस्य लोको भवत्येवेति चेत्, अथाप्यसाधारण्येनैव व्यपदेशात् अनन्तत्वाभावाच्चार्थान्तराङ्गीकारो युक्तः । प्रतिष्ठाशब्देन धारकत्वमुक्तम् । ''प्रतिष्ठा धारकः पुमान्'' इति वचनात् । तत्कस्य धारक इत्यत आह- **प्रतिष्ठेति** ॥ निहितं गुहायामित्यस्यार्थमाह- **स विष्णुरिति** ॥ एतेन ''निहितं गुहायाम्'' इत्यस्य ''विदुषां बुद्धौ प्रविष्टम्'' इति व्याख्यानमपास्तम् । किञ्च ''आत्मास्य जन्तोर्निहितो गुहायाम्'' इत्यादावुत्तरत्रात्मनो जीवहृद्गुहानिहितत्वमेवोच्यते । त्वयापि तथैव व्याख्यानात् । एवञ्चात्रापि हृद्गुहानिहितत्वमेवोच्यत इति किं न व्याक्रियते । नच अग्नौ तस्यासम्भवादेवं व्याख्यानमिति वाच्यम् । तत एव विष्णुपरत्वाङ्गीकारौचित्यात् । अन्यथा प्रायपाठविरोधादिति ॥ १.१.१४ ॥

**वे.खं-** एवमुक्तो यम आह- **प्रते ब्रवीमीति** ॥ हे नचिकेतः स्वर्ग्यं स्वर्गसाधनीभूतमग्निमग्निस्थमग्निनामकं भगवन्तं प्रकर्षेण जानन्नहं ते तं ब्रवीमि ।

त्वं तु मे मम सकाशात् तत् त्वदीप्सितं वस्तु निबोध विजानीहि । एवं प्रतिज्ञायाग्निस्थभगवत्स्वरूपमाह- **अनन्तेति** ॥ हे नचिकेतस्त्वं एतं त्वया पृष्टमग्निस्थं अग्निनामकं भगवन्तं अनन्तलोकाप्तिं अनन्तस्य लोक आप्यते येनेति, अनन्तलोक आप्यते येनेति वा अनन्तलोकाप्तिस्तम् । अथो इति विशेषणान्तरसमुच्चयार्थः । प्रतिष्ठां सर्वलोकस्य धारकम् । गुहायां सर्वेषां हृद्गुहायाम् । निहितं विद्धि जानीहि ॥ १.१.१४ ॥

**वरद-** अत्र "नाचिकेताग्निगो हरिः" इत्यनेनाग्निस्थितो भगवान् पृच्छ्यत इति ज्ञायते । "प्र ते ब्रवीमि तदु मे निबोध" इति परिहारवाक्यं व्याचष्टे- **अग्र्यत्वादिति** ॥ "लोको विष्णोः" इत्यनेनानन्तत्वं लोकस्य विष्णोश्चोभयोरपि विशेषणमिति सूचितं भवति । अनन्तस्य लोकः अनन्तलोकः, अनन्तश्चासौ लोकश्चेति वा अनन्तलोकः आप्यते येनासावनन्तलोकाप्तिरित्युभयथाप्यर्थोपपत्तेरिति ॥ १.१.१४ ॥

**वरद.खं-** यम आह- **प्र ते ब्रवीमीति** ॥ अहं त्वत्प्रसृष्टं वस्तु ते तुभ्यं प्रब्रवीमि । प्रकर्षेण वदामि । तद्वस्तु मे निबोध मत्सकाशाज्जानीहि । कथम्भूतोऽहं ब्रवीमि । स्वर्ग्यमग्निं प्रजानन् प्रकर्षेण जानमानः उपदिशन्नप्यहं न केवलं कर्ममात्रं ते ब्रवीमि किन्तु तद्गतत्वेन भगवत्स्वरूपञ्चोपदिशामीत्याह- **अनन्तेति** ॥ १.१.१४ ॥

**रा.खं-** इति याचितो यमः प्रत्युवाचेत्याह- **प्र त इति** ॥ हे नचिकेतः, स्वर्ग्यं स्वर्गसाधनमग्निं चितिस्थमग्निनामकं हरिं प्रजानन् अहं ते तुभ्यं प्रब्रवीमि प्रवच्मि । तदु तदेव त्वया पृष्टं मयोच्यमानमग्निनामकं चितिस्थहरिस्वरूपमेव मे मत्सकाशात् निबोध निबुध्यस्व जानीहि । प्रतिज्ञातं स्वर्ग्याग्निस्वरूपमुक्तवानित्याह- **अनन्तेति** ॥ अनन्तलोकाप्तिमनन्तस्य विष्णुलोकस्याऽप्तिमाप्तिसाधनम्, अथो किञ्च, प्रतिष्ठां सर्वलोक-

प्रतिष्ठाहेतुम्, गुहायां सर्वप्राणिहृदयगुहायां निहितं नितरां स्थितं सर्वलोकानामादिं कारणभूतं तमेतमग्निं चितिस्थमग्निनामकं हरिं त्वं विद्धि जानीहि इत्युवाच यमः ॥ १.१.१३ ॥

उपनिषत्

**लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।**
**स चापि तत् प्रत्यवदद् यथोक्तमथास्य मृत्युः पुनराह तुष्टः ॥**
**॥ १.१.१५ ॥**

भाष्यम्

**स एव सर्वलोकादिस्तं ज्ञात्वा मुच्यते ध्रुवम् ॥" इति च ॥**

**या इष्टकाः या इष्टकादेवताः ।**

**'इष्टकादेवतां विष्णुं षष्ट्युत्तरशतत्रिकम् ।**
**यथावदेव विज्ञाय मुच्यते कर्मबन्धनात् ॥" इति च ॥**
**॥ १.१.१५ ॥**

**व्यास-** इष्टकासङ्ख्यापरिमाणयोर्वक्तव्यत्वात्तयोश्च "यावतीर्वा यथावा" इत्युक्तत्वात् याः इति व्यर्थमित्यतस्तद्व्याचष्टे- **या इति** ॥ तेनोक्तेष्टकादेवता का इष्टकासङ्ख्या च केत्यत आह- **इष्टकेति** ॥ प्रत्यवदत् अनूदितवान् ॥
॥ १.१.१५ ॥

**वामन-** स तं एनमग्निनामानं हरिं सर्वलोकादिमुवाच । मानान्तरेण च स्पष्टयति– **इष्टकेति** ॥ इष्टकानां विष्णुर्देवता । तासां सङ्ख्यानां षष्ट्युत्तरशतत्रिकं भवति । त्रीणि शतानि च षष्टिश्च ता भवन्ति । तावत्यो विष्णुमूर्तय एव तासां देवता इति भावः ॥ १.१.१५ ॥

**वादि-** "या इष्टकाः" इत्यत्र इष्टकापदेन परितो यज्ञकुण्डबन्धनाय कुलालकृतचतुरस्रप्रादेशपरिमितमृण्मयपदार्था गृह्यन्ते । यथोक्तं यावत्परिमाणतया यावत्सङ्ख्याकतया यथा शास्त्रे कथितं तथा प्रत्यवददित्यर्थः ॥ १.१.१५ ॥

**वे.भा-** "लोकादिम्" इत्यस्य लोकानामादिं प्रथमशरीरत्वादिति व्याख्यानमसत् । अग्नेः प्रथमशरीरत्वे मानाभावात् । "तत्तेजोऽसृजत" (छा.उ.६.२.३) इति श्रुतिरस्तीति चेन्न । "आत्मन आकाशः सम्भूतः" (ब्र.व.३) इत्यपि विद्यमानत्वादिति भावेन व्याचष्टे- **स एवेति ॥** "त्रिभिरेत्य सन्धिम्" "तरति जन्ममृत्यू" "निचाय्येमां शान्तिमत्यन्तमेति" इत्यादेस्तात्पर्यमाह- **तं ज्ञात्वेति ॥**

"या इष्टकाः श्रोतव्याः स्वरूपेण तांश्चोवाच" इति व्याख्यानमसत् । इष्टकास्वरूपस्य प्रत्यक्षसिद्धत्वेनावक्तव्यत्वादिति भावेन तदनूद्य व्याचष्टे- **या इति ॥** किञ्च "त्रिनाचिकेतस्त्रयमेतद्विदित्वा" "शान्तिमत्यन्तमेति" इत्युत्तरत्र "त्रयमेतद्विदित्वा" इत्यनेन "या इष्टकाः" इत्याद्युक्तत्रयपरिज्ञानिनो मोक्षः फलत्वेनोच्यते । नच प्रसिद्धेष्टकाग्रहणे तदुपपद्यते । ननु इष्टकादेवताग्रहणेऽपि कथं तदुपपत्तिः । अन्यदेवताज्ञानेन मोक्षासम्भवादित्यतः स्मृत्यैवेष्टकादेवतास्वरूपं निरूपयन् "यावतीर्वा" इत्युक्तेष्टकादेवतासङ्ख्याश्च दर्शयन् "यथा वा" इत्युक्तं विवृणोति- **इष्टकादेवतामिति ॥** यद्यप्यन्यत्र "अशीत्युत्तरसहस्ररूपमिष्टकासु संस्थितम्" इत्युक्तम् । "अशीत्युत्तरसाहस्ररूपं वर्णेषु संस्थितम्"(ऐ.भा.२.८.२) इत्युपक्रम्य "रूपाणि विष्णोस्तावन्ति चेष्टकासु पृथक्पृथक्"(ऐ.भा.२.८.२) इत्यैतरेयभाष्ये उक्तत्वात् "अशीतिसहस्रं वार्कलिनः"(ऐ.उ.२.८.२) इति श्रुतेश्च । तथापि तत्कौण्ठरव्यमतमाश्रित्योक्तम् । अथ कौण्ठरव्य इत्युपक्रम्य "अशीतिसहस्रं वा अर्कलिनः" इत्युक्तत्वात् । ऋषिमतान्तरमाश्रित्येदमुक्तमित्यविरोधः । यद्वा प्रत्येकमेकैकेष्टकायां अशीत्युत्तरसहस्ररूपपरं तद्वचनम् ।

अत एव पृथगित्युक्तम् । अत्र तु इष्टकानां षष्ट्युत्तरशतत्रयसङ्ख्याकत्वात्तत्तद्गतैकैकरूपविवक्षया षष्ट्युत्तरशतत्रिकमित्युक्तमित्यविरोधः ॥ १.१.१५ ॥

**वे.खं-** श्रुतिः स्वयमाह- **लोकादिमिति** ॥ तं नचिकेतसा पृष्टं लोकादिं सर्वलोकादिम् । अग्निमग्निस्थं भगवन्तं तस्मै नचिकेतसे यम उवाच । न केवलमेतावत् । किन्तु इष्टका इष्टकादेवताः याः यत्स्वरूपाः । यावतीर्यावत्यो यावत्सङ्ख्याकाः, यथा वा येनैव प्रकारेण ज्ञातव्याः यत्परिमाणका वा तत्सर्वमप्युवाचेत्यर्थः । एवमुपदिष्टः स बालः नचिकेताः तत् मृत्युप्रोक्तं भगवत्स्वरूपं मृत्युना यथोक्तं तथैव प्रत्यवदत् अनूदितवांश्च । अथानुवादानन्तरमस्य नचिकेतसस्तुष्टः प्रसन्नो मृत्युः पुनराह ॥१.१.१५ ॥

**वरद-**'लोकादिमग्निम्'' इत्यस्यार्थः ''स एव सर्वलोकादिः'' इति । ''स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके'' इत्यस्यार्थः ''तं ज्ञात्वा मुच्यते'' इति । ननु यज्ञोपयोगिन्य इष्टका एतावत्य इति इष्टकानां सङ्ख्यावत्परिमाणविशेषं वा अनुक्त्वा कथं या इष्टकास्तांश्चोवाच इति वचनं सङ्गच्छते । प्रकारान्तरेणेष्टकानां कथनस्यासम्भवादित्यत आह- **या इति** ॥ ननु भवेदेवमिष्टकाभिमानिदेवतासद्भावस्य प्रामाणिकत्वे तदेव कुत इत्यत आह- **इष्टकेति** ॥ १.१.१५ ॥

**रा.खं-** तस्मै नचिकेतसे अन्यदप्युक्तवानित्याह- **या इष्टका इति** ॥ या इष्टकादेवताः, यावतीर्वा यावत्सङ्ख्याकाः, षष्ट्युत्तरशतत्रयसङ्ख्याकाः, यथा वा यादृशपरिमाणा वा ता उवाचेत्यन्वयः । षष्ट्युत्तरशतत्रयसङ्ख्याकेष्टकादेवतां विष्णुम्, इष्टकासङ्ख्यां, परिमाणं चोवाचेत्यर्थः । इष्टकादेवतायाः विष्णोरेकत्वेऽपि, इष्टकानां बहुत्वाद्वा, रूपबाहुल्येन वा बहुवचनं ''या इष्टकाः'' इति ज्ञेयम् । स चापि नचिकेता अपि यथोक्तं यमेन तत् प्रत्यवदत् अनूदितवान् । अथ अनुवादानन्तरं अनूदितत्वाद्धेतोर्वा अस्य नचिकेतसः तुष्टः सन्तुष्टो मृत्युर्यमः पुनराह ॥ १.१.१५ ॥

### उपनिषत्

**तमब्रवीत् प्रीयमाणो महात्मा वरं तवेहाद्य ददानि भूयः ।**
**तवैव नाम्ना भविताऽयमग्निः शृङ्कां चेमामनेकरूपां गृहाण ॥**
**॥ १.१.१६ ॥**

**व्यास-** अस्य तुष्टो मृत्युः पुनराह यदाह तत्तुष्ट्यवसर एवाह । नतु कालान्तर इत्याह- **तमब्रवीदिति ॥** अयमग्निस्तव नाम्नैव भवितेति वरमदात् ॥ १.१.१६ ॥

**वादि-** तुष्टः पुनराहेत्यस्यैव विवरणम्- **तमब्रवीदिति** ॥ तदैवाब्रवीन्न तु कालान्तर इति ज्ञेयम् ॥ १.१.१६ ॥

**वे.खं-** किमाहेत्यत उक्तमनुवदन्नाह- **तमिति ॥** यद्वा यदाह तत्प्रीत्यनन्तरमेवाह, नतु कालान्तर इत्याह- **तमिति ॥** प्रीयमाणो महात्मा यमस्तं नचिकेतसं प्रत्यब्रवीत् । किम् ? तवाद्येह प्रीतिनिमित्तं वरं भूयो ददानि । तं वरं दर्शयति- **तवैवेति ॥** अयं मदुपदिष्टोऽग्निस्तवैव नाम्ना प्रसिद्धो भविता । इमामनेकरूपां स्वर्णमयीं शृङ्कां कण्ठमालाञ्च गृहाणेति वरमदात् ॥ १.१.१६ ॥

**रा.खं-** किमाहेत्यत आह- **तमिति** ॥ तं नचिकेतसं प्रीयमाणः प्रीतिमान् सन् महात्मा महामनाः यमोऽब्रवीत् इत्युक्तानुवाद आदरार्थः । अद्य इदानीं भूयः पुनः, वरत्रयादन्यमिति यावत्, वरं इह चितिविषये तव ददामी-त्यब्रवीदित्यर्थः । तं वरमाह- **तवैवेति ॥** अयमग्निः इष्टकाचितिरूपोऽग्निः तव नाम्नैव नाचिकेताग्निरित्येवं रूपेण भविता भविष्यति, भवत्विति व्यत्ययो वा । अनेकरूपां बहुरूपाम्, स्वर्णमयीमिति यावत्, ''बहुरूपं च पुरटं कार्तस्वरमितीर्यते'' इत्युक्तेः । शृङ्कां कण्ठमालां चेमां गृहाणेत्यब्रवीदित्यन्वयः ॥ १.१.१६ ॥

## उपनिषत्

**त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत् तरति जन्ममृत्यू ।**
**ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥**
**॥ १.१.१७ ॥**

## भाष्यम्

**त्रिभिरेत्य सन्धिम् । वेदैरविरुद्धः । वेदोक्तप्रकारेण भगवत्तत्त्वादिकं जानन्नित्यर्थः । त्रिकर्मकृत् यज्ञदानतपःकर्ता । ''यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्'' (गीता १८.५) इति वचनात् ॥ १.१.१७ ॥**

**व्यास**- स्वयं यमस्तथा प्रायुङ्क्त चेत्याह- **त्रिनाचिकेत इति** ॥ नचिकेतसोऽयं नाचिकेतः त्रिवारं नाचिकेतो यस्यासौ त्रिनाचिकेतः ॥
॥१.१.१८ ॥

''त्रिभिरेत्य सन्धिम्'' इत्येतदनुवदन्नप्रतीतेर्व्याचष्टे- **त्रिभिरिति** ॥ वेदाविरुद्धत्वञ्च केन प्रकारेणेत्यतस्तात्पर्यार्थमाह- **वेदेति** ॥ यजनाध्ययन-दानाख्यत्रिकर्मकृदित्यन्यथाप्रतीतिनिरासायानुवदन्व्याचष्टे- **त्रिकर्मकृदिति** ॥ कुतोऽत्र यज्ञादयोऽर्थ इत्यतस्तेषामावश्यकत्वेनोक्तत्वादित्याह- **यज्ञेति** ॥ यजनादेरपि षट्कर्मत्वेनावश्यकतयोक्तत्वात्कथमेवमित्यतो यजनादेर्यज्ञा-दिष्वन्तर्भावादिति द्रष्टव्यमित्यर्थः । त्रिकर्मकृत्त्वमात्रेण जन्ममृत्यू तरति किमित्यतः ''त्रिभिरेत्य सन्धिम्'' इत्युक्तवेदोक्तभगवत्तत्त्वादिकं जानंश्चेत्याह- **ब्रह्मजज्ञमिति** ॥ निचाय्य विचार्य इमां वक्ष्यमाणां यो विद्वानेतत् त्रयं विदित्वा एवं ज्ञातप्रकारेण चिनुते स इत्यादि योजना ॥ १.१.१७ ॥

**वामन**- न केवलमिष्टकासु च कर्माङ्गत्वेन विष्णुज्ञानान्मुक्तिः । किन्तु विष्णोः सर्वज्ञत्वज्ञानादेव मुक्तिरित्यभिप्रायेणाह– **त्रिनाचिकेत इति** ॥ त्रिःप्रश्नकर्तृत्वात्, त्रिराधेयत्वात्, त्रिःश्रोतृत्वाच्च अयं त्रिनाचिकेतः ।

''त्रिभिरेत्य सन्धिम्'' इत्यनूद्य ''वेदैः...'' इत्यादिना विवृणोति । त्रिभिः वेदैरविरुद्धमर्थानुसन्धानं प्राप्य तदुक्तप्रकारेण भगवत्तत्वं जानन्, अन्यच्च तदधीनमित्यादिकं जानन्नित्यर्थः । एवं जानन्नेव जन्ममृत्यू तरति नान्यथेति भावः । यज्ञदानतपःकर्ता त्रिकर्मकृदुच्यते । ''यज्ञदान...'' (गीता.१८.५) इत्यादिगीतावचनात् ॥ १.१.१७ ॥

**वादि-** ''तथा प्रायुङ्क्त च'' इत्यत्र तथा नाचिकेत इति तन्नामानुस्यूततयैव प्रायुङ्क्त । त्रिवारं कृतनाचिकेताग्निपूज इति हि तस्यार्थः । सृङ्कां कण्ठमालाम् । अनेकरूपां स्वर्णमयीमित्यर्थः । ''यज्ञादिष्वन्तर्भावात्'' इत्यत्र यजनाध्ययनयोः यज्ञपदेनैव गृहीतत्वादिति ज्ञेयम् । इदं चोपलक्षणम् । यजनादिषट्-कर्मस्वपरिगणिततपसोऽपि सङ्गृहीतत्वादयमेव विभागः श्रेयानित्यपि द्रष्टव्यम् । ''तपसा ब्रह्म विजिज्ञासस्व'' इति हि श्रुतिः ॥ १.१.१७ ॥

**वे.भा-** ''त्रिभिरेत्य सन्धिम्'' इत्येतदप्रतीतेरनूद्य तात्पर्यमाह- **त्रिभिरिति ॥** त्रिभिः ऋग्यजुःसामाथर्वाख्यैः वेदैः सन्धिं सम्बन्धमेत्य प्राप्य, इत्यक्षरार्थमभिप्रेत्य तत्तात्पर्यमुक्तम्- **वेदैरविरुद्ध इति ॥** वेदविरुद्धत्वे वेदैः सह सम्बन्धायोगादिति भावः । ननु वेदाविरुद्धत्वं वेदाध्ययनवत्त्वं तदुक्तकर्मानुष्ठानवत्त्वं वा वाच्यम् । अन्यस्यासम्भवात् । नच तद्युक्तम् । अज्ञानामपि वेदाध्ययनादिसत्त्वेन जन्ममृत्यूत्तरणप्रसङ्गादित्यत आह- **वेदेति ॥** तथाच ''त्रिनाचिकेतः'' ''त्रिकर्मकृत्'' ''जन्ममृत्यू तरति'' इत्युक्ते भगवज्ज्ञानेनैव मोक्षश्रवणात्कथमेतदित्याशङ्कायां ज्ञानद्वारैव कर्मणो मोक्षसाधनत्वमभिप्रेतं न साक्षादिति भावेन ''त्रिभिरेत्य सन्धिम्'' इत्युक्तमिति भावः । एतेन ''त्रिभिः मातापित्राचार्यैः सन्धिं सम्बन्धमेत्य मात्राद्यनुशासनं यथावत्प्राप्य इत्यर्थः'' इत्येतदपव्याख्यानमित्युक्तं भवति । तस्यापि कर्ममात्रत्वेन साक्षाज्जन्ममृत्यूत्तरणहेतुत्वासम्भवात् त्रिकर्मकृत् ''इज्याध्ययन-दानानां कर्ता'' इति व्याख्यानमसदिति भावेन तद्व्याचष्टे- **त्रिकर्मकृदिति ॥**

परोक्त एवार्थः किन्न स्यादित्यतो यज्ञदानतपसामावश्यकत्वस्मरणादिति भावेनाह- **यज्ञेति** ॥ अध्ययनमपि न त्याज्यमिति चेन्न । अत्र तपःशब्दस्य-

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ गीता १७.१४ ॥**
**अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ गीता १७.१५ ॥**
**ननःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ गीता १७.१६**

इत्युक्तत्रिविधतपःपरत्वेनाध्ययनस्यापि तदन्तर्गतत्वादिति भावः ॥ १.१.१७ ॥

**वे.खं-** अनन्तलोकाप्तिमित्यनेनाग्निस्थभगवज्ज्ञानमनन्तलोकाप्तिसाधनमित्युक्तम् । तत्र तज्ज्ञानमेव कथं स्यादित्याशङ्कां परिहरन्ननन्तलोकाप्तिमित्युक्तं विवृणोति- **त्रिनाचिकेत इति** ॥ नचिकेतसोऽयं नाचिकेतः त्रिशश्चितो नाचिकेतोऽग्निर्येन सः त्रिनाचिकेतः त्रिकर्मकृत् यज्ञदानतपःकर्ता त्रिभिः ऋग्यजुःसामाख्यैर्वेदैः सन्धिं सन्धानमेत्य वेदैरविरुद्धो भूत्वा वेदोक्तप्रकारेण भगवत्तत्त्वादिकं ज्ञात्वेति यावत् । जन्ममृत्यू तरति । न वेदोक्तप्रकारेण भगवज्ज्ञानमपि साक्षान्मोक्षसाधनं किन्तु मननादिद्वारैव । मोक्षोऽपि न जन्ममृत्यूत्तरणरूप एव । किन्तु सुखरूपश्चेति भावेन प्रकारान्तरेणाप्यग्निस्थभगवज्ज्ञानं मोक्षसाधनमित्याह- **ब्रह्मजज्ञमिति** ॥ ब्रह्मणो वेदाज्जायते अभिव्यज्यत इति ब्रह्मजः सर्वं जानातीति ज्ञः, ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञस्तं देवं क्रीडादिगुणसम्पन्नं ईड्यं स्तुत्यं तं विदित्वा निचाय्य विचार्य तथापरोक्षतो निश्चित्येमामत्यन्तं शान्तिं आत्यन्तिकसुखरूपां शान्तिं मुक्तिमेति । ''मोक्षश्शान्तिश्च शरणं निर्वाणञ्चाभिधीयते'' (भा.ता.२.६.६) इति वचनात् ॥१.१.१७ ॥

**वरद-** ''त्रिनाचिकेतस्त्रिभिरेत्य सन्धिम्'' इत्येतद्दुर्गमार्थत्वाद्व्याचष्टे- **त्रिभिरिति** ।। वेदैरविरुद्धत्वं केन प्रकारेणेत्यत आह- **वेदेति** ।। ''त्रिकर्मकृत्'' इत्युक्तानि त्रीणि कर्माणि कानीत्यत आह- **त्रिकर्मकृदिति** ।। यजनयाजनाद्यनेकेषु कर्मसु सत्सु यज्ञदानतपसामेव कर्तेति किं विशिष्याभिधीयत इत्यतस्तेषामेव विशेषतः कर्तव्यत्वविधेरेवेत्याह- **यज्ञदानेति** ।।

।। १.१.१७ ।।

**रा.खं-** ''तवैव नाम्ना भविताऽयमग्निः'' इत्युक्तम् । तथैव व्यवहरन् तदनुष्ठातृफलमाह- **त्रिनाचिकेत इति** ।। नचिकेतसोऽयं नाचिकेतः । नाचिकेतस इति वक्तव्ये छान्दसः सलोपः । त्रयो नाचिकेता यस्यासौ त्रिनाचिकेतः, त्रिवारानुष्ठितनाचिकेतनामकाग्निचयनः पुमानित्यर्थः । त्रिभिर्वेदैः सन्धिं सन्धानं एत्य प्राप्य यो वर्तते वेदत्रयाविरुद्धो वर्तते, वेदत्रयोक्तमार्गेण भगवत्तत्त्वादिकं जानन् वर्तत इति यावत् । ''त्रिभिरेत्य सन्धिम्'' इत्यस्य पूर्वत्रोत्तरत्र चान्वयः । त्रिकर्मकृत् यज्ञदानतपःकर्ता, जन्ममृत्यू तरति मुक्तो भवतीत्यर्थः । किमेतावतैव त्रिनाचिकेतत्वत्रिकर्मकृत्त्वमात्रेण मुक्तो भवतीत्यत त्रिभिरेत्य सन्धिमित्युक्तम् । भगवत्तत्त्वादिज्ञानमप्यावश्यकमिति भावेन तद्व्यनक्ति- **ब्रह्मजज्ञमिति** ।। ब्रह्म वेदः तत्र व्यक्तत्वात् ब्रह्मजो विष्णुः, ''सप्तम्यां जनेर्डः'' (सि.कौ.३००७) जानातीति ज्ञः सर्वज्ञः, ''इगुपधज्ञाप्रीकिरः कः'' (सि.कौ.२८९७) ब्रह्मजश्चासौ ज्ञश्च ब्रह्मजज्ञः तम् । देवं क्रीडादिगुणविशिष्टम्, ईड्यं ब्रह्मादिभिः स्तुत्यम्, निचाय्य विचार्य, विदित्वा साक्षात्कृत्य, इमां वेदाद्युक्तां पूर्वोत्तरजन्ममृत्यूत्तरणरूपां वक्ष्यमाणरूपां वा, शान्तिं अत्यन्तं यथा भवति तथा एति प्राप्नोति इति ।। १.१.१७ ।।

परोक्त एवार्थः किन्न स्यादित्यतो यज्ञदानतपसामावश्यकत्वस्मरणादिति भावेनाह- **यज्ञेति** ॥ अध्ययनमपि न त्याज्यमिति चेन्न । अत्र तपःशब्दस्य-

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ गीता १७.१४ ॥**
**अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ गीता १७.१५ ॥**
**ननःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ गीता १७.१६**

इत्युक्तत्रिविधतपःपरत्वेनाध्ययनस्यापि तदन्तर्गतत्वादिति भावः ॥ १.१.१७ ॥

**वे.खं-** अनन्तलोकाप्तिमित्यनेनाग्निस्थभगवज्ज्ञानमनन्तलोकाप्तिसाधनमित्युक्तम् । तत्र तज्ज्ञानमेव कथं स्यादित्याशङ्कां परिहरन्ननन्तलोकाप्तिमित्युक्तं विवृणोति- **त्रिनाचिकेत इति** ॥ नचिकेतसोऽयं नाचिकेतः त्रिशश्चितो नाचिकेतोऽग्निर्येन सः त्रिनाचिकेतः त्रिकर्मकृत् यज्ञदानतपःकर्ता त्रिभिः ऋग्यजुःसामाख्यैर्वेदैः सन्धिं सन्धानमेत्य वेदैरविरुद्धो भूत्वा वेदोक्तप्रकारेण भगवत्तत्त्वादिकं ज्ञात्वेति यावत् । जन्ममृत्यू तरति । न वेदोक्तप्रकारेण भगवज्ज्ञानमपि साक्षान्मोक्षसाधनं किन्तु मननादिद्वारैव । मोक्षोऽपि न जन्ममृत्यूत्तरणरूप एव । किन्तु सुखरूपश्चेति भावेन प्रकारान्तरेणाप्यग्निस्थभगवज्ज्ञानं मोक्षसाधनमित्याह- **ब्रह्मजज्ञमिति** ॥ ब्रह्मणो वेदाज्जायते अभिव्यज्यत इति ब्रह्मजः सर्वं जानातीति ज्ञः, ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञस्तं देवं क्रीडादिगुणसम्पन्नं ईड्यं स्तुत्यं तं विदित्वा निचाय्य विचार्य तथापरोक्षतो निश्चित्येमामत्यन्तं शान्तिं आत्यन्तिकसुखरूपां शान्तिं मुक्तिमेति । ''मोक्षश्शान्तिश्च शरणं निर्वाणश्चाभिधीयते'' (भा.ता.२.६.६) इति वचनात् ॥१.१.१७ ॥

**वरद-** ''त्रिनाचिकेतस्त्रिभिरेत्य सन्धिम्'' इत्येतद्दुर्गमार्थत्वाद्व्याचष्टे- **त्रिभिरिति** ॥ वेदैरविरुद्धत्वं केन प्रकारेणेत्यत आह- **वेदेति** ॥ ''त्रिकर्मकृत्'' इत्युक्तानि त्रीणि कर्माणि कानीत्यत आह- **त्रिकर्मकृदिति** ॥ यजनयाजनाद्यनेकेषु कर्मसु सत्सु यज्ञदानतपसामेव कर्तेति किं विशिष्याभिधीयत इत्यतस्तेषामेव विशेषतः कर्तव्यत्वविधेरेवेत्याह- **यज्ञदानेति** ॥

॥ १.१.१७ ॥

**रा.खं-** ''तवैव नाम्ना भविताऽयमग्निः'' इत्युक्तम् । तथैव व्यवहरन् तदनुष्ठातृफलमाह- **त्रिनाचिकेत इति** ॥ नचिकेतसोऽयं नाचिकेतः । नाचिकेतस इति वक्तव्ये छान्दसः सलोपः । त्रयो नाचिकेता यस्यासौ त्रिनाचिकेतः, त्रिवारानुष्ठितनाचिकेतनामकाग्निचयनः पुमानित्यर्थः । त्रिभिर्वेदैः सन्धिं सन्धानं एत्य प्राप्य यो वर्तते वेदत्रयाविरुद्धो वर्तते, वेदत्रयोक्तमार्गेण भगवत्तत्त्वादिकं जानन् वर्तत इति यावत् । ''त्रिभिरेत्य सन्धिम्'' इत्यस्य पूर्वत्रोत्तरत्र चान्वयः । त्रिकर्मकृत् यज्ञदानतपःकर्ता, जन्ममृत्यू तरति मुक्तो भवतीत्यर्थः । किमेतावतैव त्रिनाचिकेतत्वत्रिकर्मकृत्त्वमात्रेण मुक्तो भवतीत्यत त्रिभिरेत्य सन्धिमित्युक्तम् । भगवत्तत्त्वादिज्ञानमप्यावश्यकमिति भावेन तद्व्यनक्ति- **ब्रह्मजज्ञमिति** ॥ ब्रह्म वेदः तत्र व्यक्तत्वात् ब्रह्मजो विष्णुः, ''सप्तम्यां जनेर्डः'' (सि.कौ.३००७) जानातीति ज्ञः सर्वज्ञः, ''इगुपधज्ञाप्रीकिरः कः'' (सि.कौ.२८९७) ब्रह्मजश्चासौ ज्ञश्च ब्रह्मजज्ञः तम् । देवं क्रीडादिगुणविशिष्टम्, ईड्यं ब्रह्मादिभिः स्तुत्यम्, निचाय्य विचार्य, विदित्वा साक्षात्कृत्य, इमां वेदाद्युक्तां पूर्वोत्तरजन्ममृत्यूत्तरणरूपां वक्ष्यमाणरूपां वा, शान्तिं अत्यन्तं यथा भवति तथा एति प्राप्नोति इति ॥ १.१.१७ ॥

उपनिषत्

त्रिनाचिकेतस्त्रयमेतद् विदित्वा य एवं
विद्वांश्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः
प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१.१.१८ ॥

भाष्यम्

"त्रयमेतत्" या इष्टका इत्यादि ॥ १.१.१८ ॥

ब्रह्मेति वेद उद्दिष्टस्तस्माद्यक्तो यतो हरिः ।
ब्रह्मजस्तेन कथितस्स एव ज्ञोऽखिलज्ञतः ॥ इति नामनिरुक्तौ ॥
॥१.१.१७ ॥

अनेकरूपां स्वर्णमयीम् । "बहुरूपं च पुरटं कार्तस्वरमितीर्यते" इत्यभिधानात् ।

यमोऽनुवादसन्तुष्टो वह्नेस्तन्नामतामपि ।
शृङ्कां स्वर्णमयीं चैव कण्ठमालामदाद्विभुः ॥ इति पाद्मे १.१.१६

लोकादिः प्रतिष्ठा ब्रह्मजज्ञोऽनन्तलोकाप्तिरित्यादिविशेषणैश्च भगवानेव । स्तोममहदुरुगायं प्रतिष्ठामिति परामर्शाच्च । भगवतो ह्युरुगायनाम प्रसिद्धम् । गुहानिहितत्वं च तस्यैव विशेषतः प्रसिद्धम् । न चाग्निपरिज्ञानमात्रेणानन्तलोकाप्तिर्भगवज्ज्ञानं विना । "तद्वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" इत्यादिश्रुतेः । न च मुख्ये सम्भवत्यमुख्यार्थो युज्यते ॥ १.१.१८ ॥

**व्यास**- तत्र त्रयमित्येतदप्रतीतेः व्याचष्टे- **त्रयमिति** ॥ १.१.१८ ॥ सिंहावलोकनन्यायेन ब्रह्मजज्ञपदमप्रतीतेर्व्याचष्टे- **ब्रह्मेति** ॥ १.१.१७ ॥ नन्वेवं तर्हि अनेकरूपपदमप्रतीयमानार्थमुर्वरितमित्यतस्तद्व्याचष्टे- **अनेक**-

**रूपामिति** ॥ भवत्वेवं व्याख्या यदि बहुरूपशब्दस्य सुवर्णवाचित्वं सिध्येत् । तदेव कुत इत्यतोऽभिधानेन समर्थयते- **बहुरूपमिति** ॥ अस्त्वनेकरूपा सुवर्णमयीति । अत्र सेति कुत इत्यत आह- **यम इति** ॥ १.१.१६ ॥

"स त्वमग्निं स्वर्ग्यम्" इति "स्वर्ग्यमग्निं नचिकेतः" इति पृष्टमुक्तश्च अग्निगहरिस्वरूपमिति व्याख्यानरूपागमैः सिद्धमेव । आन्तरोपपत्तिभिश्च तत्साधयति- **लोकादिरित्यादिना** ॥ लोकादिरित्यादिविशेषणैश्च विशेषणानामन्यत्रासम्भवात् पृष्टोऽग्निरुक्तश्च भगवानेवेत्यर्थः । इतोऽपि नाग्निमात्रं पृष्टमुक्तं चेत्याह- **स्तोम महदिति** ॥ उत्तरत्र परामर्शाच्च । उरुगायनाम्नो भगवति प्रसिद्धौ खलु प्रश्नपरिहारयोर्भगवत्परत्वमित्यत आह- **भगवत इति** ॥ हिशब्देन "श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः" (भाग.२.९.१३) इति "विचक्रमाणस्त्रेधोरुगायः" (ऋ.सं.१.१५४.१) इति स्मृतिश्रुतिभिः प्रसिद्धिं स्फुटयति । प्रकृतमर्थं लिङ्गान्तरेण च समर्थयते- **गुहानिहितत्वं चेति** ॥ "विद्धि त्वमेतं निहितं गुहायाम्" इत्युक्तं गुहानिहितत्वं च तस्यैव भगवत एव । "तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" (म.ना.उ.१३.१२) इत्यादौ अत्र च "मध्ये वामनमासीनम्" इत्यादौ विशेषतः प्रसिद्धमित्यतोऽप्यग्निगहरिस्वरूपमेव पृष्टमुक्तं चेत्यर्थः । अनन्तलोकाप्तित्वादिविशेषणानामन्यत्रापि घटमानत्वे कथं प्रश्नपरिहारयोर्विष्णुस्वरूपविषयत्वनिश्चय इत्यतो मैवमग्निपरिज्ञानादनन्त-लोकाप्तिश्रवणादित्याशयवांस्तस्याग्नावसम्भवं समर्थयितुं प्रतिजानीते- **नचाग्नीति** ॥ कुतोऽग्निपरिज्ञानादेरनन्तलोकाप्त्यभावोऽवगत इत्यत आह- **तद्वा इति** ॥ जुहोति ददाति । बहूनि वर्षसहस्राणि तपस्तप्यते तत्सर्वमन्तवदेवान्तवत्फलं भवतीति योजना । ननु स्वर्गो बहुकालीन-त्वादनन्त इत्युच्यतेऽतस्तत्प्रापकोऽग्निरपि अनन्तलोकाप्तिः इत्युच्यतेऽतः कात्रायुक्तिरित्यत आह- **नचेति** ॥ बाधकाभावेन मुख्यार्थे सति युक्ते सति ।

प्रीत्या स्वदत्तं वरमवधारयति- **एतमिति ॥** तवैव नाम्ना प्रवक्ष्यन्ति जनाः ॥
॥ १.१.१८ ॥

**वामन-** यज्ञकर्मस्वित्थम्भावोऽस्तीत्याह— **त्रिनाचिकेत इत्युत्तरवाक्येन ॥** "त्रयमेतद् विदित्वा" इत्युच्यमानं वेद्यत्रयं किमित्याकाङ्क्षायामुच्यते— **"या इष्टका यावतीर्वा यथा वा" इति ॥** प्रागुक्तं देवतादित्रयम् । नचिकेतसे तुभ्यं मयोक्तमग्निं य एवं स्वर्गापवर्गदं विद्वान् त्रिशः चिनुते । "त्रिशोऽग्निं नाचिकेतकम् । यश्चयीत" इत्यधस्तादुक्तम् । स मृत्युपाशान् कर्मबन्धान् प्रणोद्य पुरतः पूर्वतः किञ्चित्कालं स्वर्गलोके मोदते । पश्चात् वैकुण्ठादौ अनन्तलोके नित्यं मोदते । "स तु प्राप्य स्वर्गं तत्र भयातिगः । उष्य मन्वन्तरं कालममृतत्वं भजेत् क्रमात्" इति प्रमाणमुक्तम् । नचैतत् फलमपि पुनरुक्तम् । "ब्रह्मजज्ञम्" इत्यत्र कर्मपाशविनाशानुक्तेः ॥ ब्रह्मजज्ञमिति विशेषणस्यार्थं तु "ब्रह्मेति वेदः..." इत्यादिनामनिरुक्तवाक्येन निर्वक्ति । वेदव्यक्ताखिलज्ञं विष्णुं देवं सर्वदेवेड्यं श्रवणादिना विदित्वा निचाय्य ध्यानादिना परमार्थतो दृष्ट्वा तत्फलभूतां इमां शान्तिं सुखपूर्तिं अत्यन्तं अनन्तकालीनां एति ॥
॥१.१.१८ ॥

**वादि-** "त्रिकर्मकृत्" इति प्रागुक्तत्वात् पुनः "त्रयमेतद्विदित्वा" इत्यस्य कोऽर्थ इत्यत आह- **त्रयमेतद्या इष्टका इत्यादीति** ॥ "या इष्टकाः" इत्यादिश्रुतौ त्रयं या इष्टकादेवताः, यावतीरिति या सङ्ख्या, "यथा वा" इति यदिष्टकाप्रमाणं चेति त्रयमुदितं तदेव त्रयमत्र विवक्षितम् । न तु पूर्वोक्तमतो न पौनरुक्त्यम् । अत एव तत्र "त्रिकर्मकृत्" इत्युक्तम् । अत्र तु "विदित्वा" इत्युक्तमिति ज्ञेयम् । ब्रह्मजं "जनि प्रादुर्भावे" इति धातोः वेदवचनैरभिव्यक्तस्वरूपमित्यर्थः । जानातीति ज्ञम् । ज्ञेयविशेषानुक्तेः सङ्कोचे कारणाभावाच्च सर्वज्ञमित्यर्थः ॥ १.१.१८ ॥

**वे.भा-** ''त्रयमेतत्'' इत्यत्रोक्तत्रयं किमिति न ज्ञायते अत आह- **त्रयमेतदिति ॥** ''ब्रह्मजज्ञम्'' इत्येतस्य ''ब्रह्मणो हिरण्यगर्भाज्जायत इति ब्रह्मजः स चासौ ज्ञश्चेति तथोक्तः'' इति व्याख्यानमसदिति भावेन ब्रह्मजज्ञपदं स्मृत्यैव व्याचष्टे- **ब्रह्मेतीति** ॥ १.१.१८ ॥

**वे.खं-** न केवलमग्निस्थभगवज्ज्ञानमेव मोक्षसाधनम् । किन्तु ''या इष्टकाः'' इत्याद्युक्तेष्टकादेवताज्ञानमपीत्याह- **त्रिनाचिकेत इति ॥** त्रिवारकृतनाचिकेतः त्रयमेतत् ''या इष्टका यावतीर्वा यथा वा'' इत्युक्तेष्टकादेवतां विष्णुं तत्सङ्ख्यां षष्ट्युत्तरशतत्रयलक्षणां तत्परिमाणञ्च विदित्वा शान्तिमत्यन्तमेतीति पूर्वेण सम्बन्धः । इदानीमुक्तरीत्या जानन् कर्मकर्ता योग्यश्चेद्भवति सायुज्यञ्च तस्य फलमित्याह- **य एवमिति ॥** योऽधिकारी एवमुक्तप्रकारेणाग्निस्थविष्णुं विद्वान् नाचिकेतमग्निं चिनुते त्रिश इति शेषः । सः पुरतः प्रथमतो मृत्युपाशान् संसारमिति यावत् । प्रणोद्य शोकातिगः सन् स्वर्गलोके आनन्दज्ञानप्रकाशरूपे विष्णौ प्रविष्टः सन् मोदते । ''स्तोम महदुरुगायं प्रतिष्ठाम्'' इत्युत्तरत्र मोक्षे प्रवेशार्थकप्रतिष्ठाशब्दस्य पूर्वोक्तपरामर्शरूपत्वस्य भाष्ये उक्तत्वात्, अन्यस्य तत्परामृश्यस्य पूर्वमभावात् स्वर्गलोक इत्येतदेव तत्परामृश्यमिति एवं व्याख्यातम् । यद्वा योऽधिकारी उक्तरीत्या विद्वान् कर्म करोति तस्य सर्वस्यापि उक्तं फलं भवतीत्याह- **एवमिति ॥** स्वर्गलोके प्रसिद्धे मोदते । तदनन्तरं क्रमात् स्वर्गलोके विष्णुलोके मोदत इति व्याख्येयम् । नचायं स्वर्गलोकः प्रसिद्ध एव । ''स्वर्गलोका अमृतत्वं भजन्ते'' इत्युपक्रमात् ॥ १.१.१८ ॥

**वरद-** ''त्रयमेतद्विदित्वा'' इत्यत्र त्रीणि वस्तूनि प्रस्तुतानि तानि कानीत्यत आह- **त्रयमेतदिति ॥** ''ब्रह्मजज्ञं देवमीड्यम्''(१.१७) इत्येतद्दुर्गमार्थत्वाद्व्याचष्टे- **ब्रह्मेतीति ॥** ''शृङ्कां चेमामनेकरूपाम्'' (१.१६) इत्यत्र शृङ्काया अनेकरूपत्वं नीलपीताद्यनेकसम्बन्धेनेति प्रतीति-

प्रीत्या स्वदत्तं वरमवधारयति- **एतमिति ॥** तवैव नाम्ना प्रवक्ष्यन्ति जनाः ॥
॥ १.१.१८ ॥

**वामन-** यज्ञकर्मस्वित्थम्भावोऽस्तीत्याह- **त्रिनाचिकेत इत्युत्तरवाक्येन ॥** "त्रयमेतद् विदित्वा" इत्युच्यमानं वेद्यत्रयं किमित्याकाङ्क्षायामुच्यते- **"या इष्टका यावतीर्वा यथा वा" इति ॥** प्रागुक्तं देवतादित्रयम् । नचिकेतसे तुभ्यं मयोक्तमग्निं य एवं स्वर्गापवर्गदं विद्वान् त्रिशः चिनुते । "त्रिशोऽग्निं नाचिकेतकम् । यश्चयीत" इत्यधस्तादुक्तम् । स मृत्युपाशान् कर्मबन्धान् प्रणोद्य पुरतः पूर्वतः किञ्चित्कालं स्वर्गलोके मोदते । पश्चात् वैकुण्ठादौ अनन्तलोके नित्यं मोदते । "स तु प्राप्य स्वर्गं तत्र भयातिगः । उष्य मन्वन्तरं कालममृतत्वं भजेत् क्रमात्" इति प्रमाणमुक्तम् । नचैतत् फलमपि पुनरुक्तम् । "ब्रह्मजज्ञम्" इत्यत्र कर्मपाशविनाशानुक्तेः ॥ ब्रह्मजज्ञमिति विशेषणस्यार्थं तु "ब्रह्मेति वेदः..." इत्यादिनामनिरुक्तवाक्येन निर्वक्ति । वेदव्यक्ताखिलज्ञं विष्णुं देवं सर्वदेवेड्यं श्रवणादिना विदित्वा निचाय्य ध्यानादिना परमार्थतो दृष्ट्वा तत्फलभूतां इमां शान्तिं सुखपूर्तिं अत्यन्तं अनन्तकालीनां एति ॥
॥१.१.१८ ॥

**वादि-** "त्रिकर्मकृत्" इति प्रागुक्तत्वात् पुनः "त्रयमेतद्विदित्वा" इत्यस्य कोऽर्थ इत्यत आह- **त्रयमेतद्या इष्टका इत्यादीति** ॥ "या इष्टकाः" इत्यादिश्रुतौ त्रयं या इष्टकादेवताः, यावतीरिति या सङ्ख्या, "यथा वा" इति यदिष्टकाप्रमाणं चेति त्रयमुदितं तदेव त्रयमत्र विवक्षितम् । न तु पूर्वोक्तमतो न पौनरुक्त्यम् । अत एव तत्र "त्रिकर्मकृत्" इत्युक्तम् । अत्र तु "विदित्वा" इत्युक्तमिति ज्ञेयम् । ब्रह्मजं "जनि प्रादुर्भावे" इति धातोः वेदवचनैरभिव्यक्तस्वरूपमित्यर्थः । जानातीति ज्ञम् । ज्ञेयविशेषानुक्तेः सङ्कोचे कारणाभावाच्च सर्वज्ञमित्यर्थः ॥ १.१.१८ ॥

**वे.भा-** "त्रयमेतत्" इत्यत्रोक्तत्रयं किमिति न ज्ञायते अत आह- **त्रयमेतदिति ॥** "ब्रह्मजज्ञम्" इत्येतस्य "ब्रह्मणो हिरण्यगर्भाज्जायत इति ब्रह्मजः स चासौ ज्ञश्चेति तथोक्तः" इति व्याख्यानमसदिति भावेन ब्रह्मजज्ञपदं स्मृत्यैव व्याचष्टे- **ब्रह्मेतीति** ॥ १.१.१८ ॥

**वे.खं-** न केवलमग्निस्थभगवज्ज्ञानमेव मोक्षसाधनम् । किन्तु "या इष्टकाः" इत्याद्युक्तेष्टकादेवताज्ञानमपीत्याह- **त्रिनाचिकेत इति ॥** त्रिवारकृतनाचिकेतः त्रयमेतत् "या इष्टका यावतीर्वा यथा वा" इत्युक्तेष्टकादेवतां विष्णुं तत्सङ्ख्यां षष्ट्युत्तरशतत्रयलक्षणां तत्परिमाणञ्च विदित्वा शान्तिमत्यन्तमेतीति पूर्वेण सम्बन्धः । इदानीमुक्तरीत्या जानन् कर्मकर्ता योग्यश्चेद्भवति सायुज्यञ्च तस्य फलमित्याह- **य एवमिति ॥** योऽधिकारी एवमुक्तप्रकारेणाग्निस्थविष्णुं विद्वान् नाचिकेतमग्निं चिनुते त्रिश इति शेषः । सः पुरतः प्रथमतो मृत्युपाशान् संसारमिति यावत् । प्रणोद्य शोकातिगः सन् स्वर्गलोके आनन्दज्ञानप्रकाशरूपे विष्णौ प्रविष्टः सन् मोदते । "स्तोम महदुरुगायं प्रतिष्ठाम्" इत्युत्तरत्र मोक्षे प्रवेशार्थकप्रतिष्ठाशब्दस्य पूर्वोक्तपरामर्शरूपत्वस्य भाष्ये उक्तत्वात्, अन्यस्य तत्परामृश्यस्य पूर्वमभावात् स्वर्गलोक इत्येतदेव तत्परामृश्यमिति एवं व्याख्यातम् । यद्वा योऽधिकारी उक्तरीत्या विद्वान् कर्म करोति तस्य सर्वस्यापि उक्तं फलं भवतीत्याह- **एवमिति ॥** स्वर्गलोके प्रसिद्धे मोदते । तदनन्तरं क्रमात् स्वर्गलोके विष्णुलोके मोदत इति व्याख्येयम् । नचायं स्वर्गलोकः प्रसिद्ध एव । "स्वर्गलोका अमृतत्वं भजन्ते" इत्युपक्रमात् ॥ १.१.१८ ॥

**वरद-** "त्रयमेतद्विदित्वा" इत्यत्र त्रीणि वस्तूनि प्रस्तुतानि तानि कानीत्यत आह- **त्रयमेतदिति ॥** "ब्रह्मजज्ञं देवमीड्यम्" (१.१७) इत्येतद्दुर्गमार्थत्वाद्व्याचष्टे- **ब्रह्मेतीति ॥** "शृङ्कां चेमामनेकरूपाम्" (१.१६) इत्यत्र शृङ्काया अनेकरूपत्वं नीलपीताद्यनेकसम्बन्धेनेति प्रतीति-

निरासायाह- **अनेकेति** ॥ अनेकरूपशब्दस्य सुवर्णार्थत्वे विधानमाह- **बहुरूपमिति** ॥ अस्तु बहुरूपशब्दस्य सुवर्णेऽपि वाचकत्वशक्तिः तथाप्यत्रानेकरूपशब्देन तद्विवक्षितमिति कुत इत्यत्राह- **यम इति** ॥ एवं बाह्यप्रमाणैः स्वर्ग्याग्निप्रकरणे विष्णुः प्रतिपाद्यत इत्युक्तम् । आन्तरोपपत्तिभिश्च तदेतत्समर्थयते- **लोकादिरिति** ॥ किञ्च यमेन नाचिकेतसप्रशंसायां क्रियमाणायां त्वं मयोपदिष्टं स्वर्ग्याग्निसंज्ञकं स्तोम महदुरुगायं दृष्ट्वा विषयभोगानत्यस्राक्षीरिति पूर्वोपदिष्टे स्वर्ग्याग्नावुरुगायशब्दप्रयोगाच्चासा-वग्निर्हरिरेवेत्याह- **स्तोमेति** ॥ ननु उरुगायशब्देन कथं विष्णुत्वसिद्धिरित्यत आह- **भगवत इति** ॥ "विद्धि त्वमेतं निहितं गुहायाम्" इति गुहानिहितत्वलिङ्गाच्च विष्णुरित्याह- **गुहानिहितत्वश्चेति** ॥ लोकादिः प्रतिष्ठा ब्रह्मजज्ञः अनन्तलोकाप्तिरित्यादिविशेषणबलाद्विष्णुरेव प्रतिपाद्यत इत्युक्तम् । इदानीं तेषां विशेषणानां विष्णोरन्यत्र प्रवृत्तिमाह- **न चेति** ॥ उपलक्षणमेतत् । लोकादित्वश्चाग्न्यादीनां नास्तीत्यवगन्तव्यम् । भगवज्ज्ञान-मन्तरेणानन्तलोकाप्तिर्नास्तीत्यत्र श्रुतिमाह- **तद्वा एतदिति** ॥ नचाग्न्यादि-ज्ञानेन मुख्यतोऽनन्तलोकाप्तिर्न घटते चेदौपचारिकी सास्त्वित्यत आह- **नचेति** ॥ १.१.१८ ॥

**रा.खं-** उक्तमेवार्थं पुनर्विशदमाह- **त्रिनाचिकेत इति** ॥ यो विद्वान् त्रिनाचिकेतः त्रिवारं नाचिकेताग्निमनुतिष्ठन् एतत् त्रयं "या इष्टकाः" इत्यादिनोक्तं विष्णुरूपेष्टकादेवतेष्टकासङ्ख्येष्टकापरिमाणरूपं त्रयं विदित्वा एवं ज्ञातप्रकारेण नाचिकेताग्निं चिनुते श्येनकूर्माद्याकारेणेष्टकादिभिः वेदिं करोति स पुमान् पुरतः पुरः स्थितान् मृत्युपाशान् यमपाशान् प्रणोद्य निरस्य शोकातिगः शोकानतिक्रान्तः स्वर्गलोके हरिलोके मोदते सुखमनुभवति ॥

उपनिषत्

**एष तेऽग्निर्नाचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।**
**एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥**
**॥१.१.१९॥**

**वे.खं-** प्रीत्या स्वदत्तं वरमवधारयति- **एष इति** ॥ त्वं यं द्वितीयवरेणावृणीथाः एष स्वर्ग्योऽग्निर्नाचिकेत इति ते तव नाम्ना प्रसिद्धो भविता । कथम् ? एतमग्निं तवैव नाम्ना जनासो जनाः प्रवक्ष्यन्ति । एवं द्वितीयं वरं दत्वा प्रीत्या स्वदत्तं वरञ्चावधार्येदानीं तृतीयं वरं प्रार्थयेत्याह- **तृतीयमिति** ॥ १.१.१९ ॥

**वरद.खं-** न केवलमहमेक एवैतमग्निं तव नाम्ना प्रवक्ष्यामि अन्ये जना अपि एतमग्निमग्निष्टोमं तव नाम्ना लोके प्रवक्ष्यन्तीत्याह- **एतमग्निमिति** ॥ ॥१.१.१९ ॥

**रा.खं-** उपसंहरति- **एष इति** ॥ द्वितीयेन वरेण द्वितीयं वरं यमवृणीथा वृतवानसि एष स्वर्ग्यः स्वर्गसाधनः नाचिकेतनामकोऽग्निः ते कथित इति योज्यम् । प्रीत्या स्वदत्तं वरं निर्धारयति । एतमग्निं तवैव त्वत्सम्बन्धिनमेव, त्वन्नाम्नैवेति यावत्, जनासो जनाः, "आज्जसेरसुक्" (सि.कौ.३५७२) प्रवक्ष्यन्ति प्रवदिष्यन्तीति यमो वक्ति- **तृतीयं वरमिति** ॥ वृणीष्वेत्युवाच यम इत्यर्थः ॥ १.१.१९ ॥

उपनिषत्

**येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।**
**एतद् विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वृतस्तृतीयः ॥२०॥**

### भाष्यम्

प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति । नास्तीत्यज्ञाः । तस्य नियामकस्य स्वरूपं यथावदहं विद्याम् ।

'अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥'

इति परिहाराच्च मुक्ते स्थितो भगवान् पृच्छ्यत इति सिद्धम् । देहाद्विशेषेण मोचनं नाम मुक्तिरेव । मुक्तेरपि मरणात्मकत्वात् मरणमित्यपि भवति । स्थूलदेहपरित्यागस्तु विस्रंसमानस्येत्यनेनैवोक्तो भवति ।

अग्निस्थं परमात्मानं सामान्याज्जानतोऽपि तु ।
अजानतस्तु मुक्तौ च जीवान्तस्थितमीश्वरम् ॥

नियामकं च जीवानां मुक्तानामपि सर्वदा ।
गुणान् सर्वोत्तमत्वादीनविज्ञाय हरेस्तथा ॥

नैव मुक्तिर्भवेत्तस्मात् कृच्छ्रात्तदवदद्यमः ।
तस्य गोप्यत्वविज्ञप्त्यै तथाऽप्यग्निस्थवेदनात् ।
सुखाधिक्यं भवेन्मुक्तौ तस्मात्तत्पृथगीरितम् ॥ इति तत्त्वसारे

'स्थाणुमन्येऽनुसँयन्ति यथा कर्म यथा श्रुतम्'' इत्युक्त्वा ''य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः'' इति वचनाच्च जीवेषु स्थितो भगवान् पृच्छ्यत इति सिद्धम् । मृतजीवे स्थितो मुक्तजीवे स्थितश्चोभयात्मको भगवान्विवक्षित इत्येतस्माच्चाविरोधः ।

'गुह्यं तत्परमं ब्रह्म म्रियमाणं शरीरिणम् ।
सम्प्राप्तमपि जीवेषु जागर्ति स्वपितेष्वपि ॥''

इति ब्रह्माण्डे ॥ १.१.२० ॥

**व्यास-** तृतीयं वरं वरयते- **येयमिति** ॥ प्रेते मनुष्ये प्रेरकोऽस्तीत्येके नायमस्तीति चैके अतो विप्रतिपत्तेर्मम विचिकित्सा संशयो जायत इति विचिकित्सा या यद्विषया एतदेतस्य स्वरूपं त्वयानुशिष्टोऽहं विद्यामिति योजना। तद्वाक्यं विदुषां विप्रतिपत्तिरिति प्रतीतिं निवारयन् योजयति- **प्रेत इति** ॥ "मरणानन्तरमपि जीवोऽस्तीत्येके तदनन्तरं नास्तीति चैके अतो ममैवं विचिकित्सा जाता एतद्विद्याम्" इति केषाञ्चिद्व्याख्या तां दूषयति- **अस्येति** ॥ यन्नियामकं पृष्टं तदेतद्वै इति योजना। ननु नात्र वाक्ये मोक्षः प्रतीयते येन मोक्षनियामकोऽस्ति किं ? अस्ति नियामक इति प्रश्नपरिहारौ प्रतीम इत्यतः ज्ञापकयुक्तिमाह- **देहादिति** ॥ ननु "मरणं मानुप्राक्षीः" इति वचनान्मरणानन्तरमपि जीवः अस्ति किमिति पृष्टमित्यवगम्यते इत्यतः युक्तिः सावकाश इत्यत आह- **मुक्तेरपीति** ॥ ननु "देहात् विमुच्यमानस्य" इत्यस्य स्थूलदेहपरित्याग एव अर्थः किं न स्यादित्यतः "विस्रंसमानस्य" इत्यनेन पुनरुक्तिप्रसङ्गान्नैष अर्थ इत्याह- **स्थूलेति** ॥ द्वितीयप्रश्नस्य इव तृतीयप्रश्नस्यापि ईश्वरपरत्वे अक्लेशेनाग्निस्थपरमात्मस्वरूपमुक्त्वा मा मोपरोत्सीरिति संक्लिश्य "शतायुषः" इत्यादिप्रलोभेन "सर्वे वेदाः" इत्याद्युक्तिरयुक्ता द्वयोरपि प्रश्नयोरेकविषयत्वादित्यतो द्वयोरपीश्वरविषयत्वेऽपि संक्लिश्योक्तिं घटयति- **अग्निस्थमित्यादिना** ॥ जीवान्तःस्थितत्वञ्च न आकाशस्य इव इत्युक्तम्- **नियामकमिति** ॥ तथा "इन्द्रियेभ्यः पराः" इत्यादिना उक्तान् सर्वोत्तमत्वादिगुणानविज्ञाय वर्तमानस्य मुक्तनियामकत्व-सर्वोत्तमत्वादिगुणज्ञानात् मोक्षसिद्धेः द्वितीयप्रश्नपरिहारावयुक्तौ इति शङ्कां प्रयोजनकथनेन वारयति- **तथापीति** ॥ ईश्वरविषय एव तृतीयोऽपि प्रश्नः इत्यत्र ज्ञापकान्तरञ्चाह- **स्थाणुमिति** ॥ ननु मुक्तजीवविषयश्चेत् प्रश्नः कृतः तर्हि मुक्तानां योन्यादिप्राप्त्यभावात् "योनिमन्ये" इत्याद्युक्त्वा "य एषु सुप्तेषु जागर्ति" इत्यत्र तन्नियामकत्वोक्तिः विरुद्धा इत्यतो विरोधं

प्रश्नविवक्षोक्त्या परिहरति- **मृतेति** ॥ ''येयं प्रेते'' इत्यत्र मृतमुक्तस्थितोभयरूपः भगवान् विवक्षितः । तत्र मृतनियामकत्वमत्र उच्यते इत्येतस्मान्न विरोध इत्यर्थः । ''य एषु सुप्तेषु'' इत्यत्र जाग्रद्वर्तते ब्रह्मेत्युक्तं तत्कुत इत्यतः समाख्यां तत्र पठति- **गुह्यमिति** ॥ तृतीयप्रश्नविषयस्य अतिदुर्ज्ञेयत्वमाह- **देवैरिति** ॥ विचिकित्सितं सन्दिग्धम् । तत्र अणुः सूक्ष्मः एष धर्म इत्युक्तिः कथम् ? भगवत्स्वरूपस्य प्रकृतत्वादित्यतः घटयन्नाह- **धारकत्वादिति** ॥ एतस्य वरस्य तुल्योऽन्यो वरो नास्ति । अस्य वक्ता च त्वादृगन्यो न लभ्योऽतः त्वं ब्रूहि इति योजना ॥ १.१.२० ॥

**वामन**- ''एष तेऽग्निः'' इति स्वर्ग्याग्न्युपदेशमुपसंहरति । स च नचिकेता यमोपदिष्टमग्नीष्टकादिस्वरूपं यथावत् प्रतिबुध्य अन्ववदत् । अपिशब्दात् तत्कर्मज्ञानफलमपि स्वर्गापवर्गाख्यमुत्तरवाक्योक्तं यथावदन्ववदत् । तदर्थद्वयानु-वादग्राहकं ''स चापि'' इत्येतद् वाक्यम् । अतः तज्ज्ञापनार्थं हि अस्य वाक्यस्य अभिप्रायं अन्तत एव प्रावोचत् । अथ मृत्युः अस्य नचिकेतसः सन्तुष्टः पुनः अन्यच्च किञ्चित् आह ॥

''तमब्रवीत् प्रीयमाणः'' इति पुनरुक्तिस्तत्र तात्पर्यज्ञापनाय । इह लोके तव कीर्तिकरं अन्यदपि वरं ददानि इत्यब्रवीत् । ''तवैव'' इत्यादि वदन् ददौ । कथम्भूतां सृङ्काम् ? अनेकरूपाम् । स्वर्णमयीमित्यर्थः । ''बहुरूपं च'' इत्यभिधानात् ॥

''अथाऽस्य मृत्युः पुनराह तुष्टः'' इत्यादेरभिप्रायं ''यमोऽनुवाद...'' इत्यादिना पाद्मवचनेन स्पष्टयति ॥

एतमग्निं तवैव मया प्रोक्तं प्रवक्ष्यन्ति, तवैव नाम्ना च ॥ १.१.१९ ॥

ननु नायं स्वर्ग्याग्निर्भगवान् विष्णुः । अग्निशब्दस्य लोकतः प्रसिद्धेरित्यत आह– **लोकादिरित्यादि** ॥ अत्र हि स्वर्ग्याग्नेः ''लोकादिमग्निम्'' इति

जगतः स्रष्टृत्वमुच्यते । प्रतिष्ठाशब्देन स्थापकत्वम् । "ब्रह्मजज्ञम्" इति वेदैकगम्यत्वं सर्वज्ञत्वं च । "अनन्तलोकाप्तिम्" इति नित्यलोकप्रापकत्वम् । जन्मादिकारणत्वं वेदैकगम्यत्वं संसारतारकत्वं पुनः सुखैकभोजकत्वं च तस्यैव युज्यते । तस्मादेतैरनन्यसाधारणविशेषणैर्भगवान् विष्णुरेव स्वर्ग्योग्निः । चशब्दात् सावकाशश्रुतेः निरवकाशलिङ्गानां प्राबल्यसिद्धेश्चेत्यर्थः ॥

अग्निप्रकरणपठितायाः प्रतिष्ठायाः "स्तोममहत्" इत्यत्रोरुगायधर्मत्वेन परामर्शदर्शनात् स हि स्वर्ग्योग्निः । नचैतदपि नामान्यसाधारणमित्याह – **भगवतो हीति** ॥ अनन्यसाधारणतया भगवतो ह्युरुगायनामेति श्रुतिस्मृतिसिद्धम् । "विचक्रमाणस्त्रेधोरुगायः" (ऋ.सं.१.१५४.१) "न चेत् प्रगायत्युरुगायगाथाम्" (भाग.२.३.२०) इत्यादि । नचाग्निशब्दो विष्णौ निरवकाशः । प्रत्युत तस्मिन्नेव मुख्यवृत्तिश्च । "नामानि सर्वाणि यमाविशन्ति" इत्यादिश्रुतेः । इतश्च विष्णुरेव स्वर्ग्योग्निरित्याह– **गुहेति** ॥ गुहानिहितत्वं च भगवतो विष्णोरेव प्रसिद्धम् । "प्रसिद्धेश्च" (ब्र.सू.१.३.१७) इति सूत्रात् । पूर्वोक्तलिङ्गेभ्यः प्रधानत्वादेतत् पृथगुक्तम् ॥

एवं लिङ्गानुकूल्यं स्वार्थस्य दर्शितम् । अथ परार्थस्य तद्वैलोम्यं दर्शयति – **नचेति** ॥ नच भगवज्ज्ञानं विना भूताग्निपरिज्ञानमात्रेण अनन्तलोकाप्तिः कस्यापि युक्ता । "तद्वा एतदक्षरम्" (बृ.उ.५.८.११) इत्यादिश्रुति-विरोधात् । अपराग्निपरिज्ञानेनापि कथञ्चिदनन्तलोकाप्तिसम्भवात् सैवानन्त-लोकाप्तिरित्युपचर्यत इत्यत आह– **नचेति** ॥ अग्निशब्दस्य मुख्यार्थो विष्णुरुक्तः । अनन्तलोकशब्दस्यापि तल्लोक एव । अतस्तन्मुख्यार्थे सम्भवति नाग्न्यादिरमुख्यार्थो युज्यते । अतो विष्णुरेव स्वर्ग्योऽग्निः, तज्ज्ञानादेव मोक्ष इति सिद्धम् ॥ १.१.१५-१९ ॥

अथ "येयं प्रेते" इत्यादि नचिकेतास्तृतीयं वरं वृणीते । तद्वाक्याभिप्रायं "प्रेते मुक्ते" इत्यादिभाष्येण प्रपञ्चयति । "येयं प्रेते मनुष्ये" मुक्ते जीवे

परमात्मविचिकित्सा विचारणा वादिभिः क्रियते । मुक्तजीवे तन्नियामकत्वेन भगवानस्ति वा नवेति तत्र अस्तीत्येके वदन्ति । नास्तीति च अन्ये । अनयोः कतरत् प्राज्ञमतत्वेन ग्राह्यमिति एतत् विद्याम् । यदि च तस्मिन् नियामकः अस्तीति ज्ञानिनो वदन्ति नास्तीत्यज्ञाः तर्हि तस्य नियामकस्य नियमनादिशक्तिमद्रूपं त्वयाऽनुशिष्टोऽहं यथावद् विद्याम् ॥ १.१.२० ॥

**वादि-** ''अस्य विस्रंसमानस्य शरीरस्थस्य'' इत्यत्र अस्य विस्रंसमानस्य स्थूलदेहं त्यजतः । देहाद्विमुच्यमानस्य देहिन इति पुनरपि देहाद्विमोचन-कथनात् लिङ्गदेहाख्यदेहविमोचनमेव लभ्यते । लिङ्गदेहविमोचनं च मोक्षकाल एव । अत एव विमुच्यमानस्य विशेषेण मुच्यमानस्य द्विविधदेहादपि मुच्यमानस्येति मोक्षज्ञापनाय वीत्युपसर्गः प्रयुक्तः । एवं च द्वेधाऽपि मोक्षप्रकरणमिदमिति ज्ञातव्यम् । ''कृच्छ्रात्तदवदद्यमः'' इत्यत्र सांसारिकाग्निस्थपरमात्मनि विवादाभावेन गोप्यत्वाभावात्तत्सुखेनैवोक्तम् । मुक्तिस्थपरमात्मा तु मुक्तावप्यैक्यं वदतां मायिनां नानुमतः । अत एव गोप्यं तत्त्वम् । एतादृशतत्त्वस्यापि स्पष्टतयैवोक्तौ दुर्मतप्रवृत्तेरभावप्रसङ्गादुपरोध-पूर्वकं तदुक्तम् । उपरोधो नाम कृच्छ्रमिति ज्ञेयम् । ''स्थाणुमन्येऽनु संयन्ति'' इत्यत्र ''स्थाणुमन्येऽनु संयन्ति यथाकर्म यथाश्रुतम्'' इति जीवमुक्त्वा ''य एषु सुप्तेषु जागर्ति'' इति वाक्ये एषु जीवेषु सुप्तेषु सत्सु यः जागर्तीत्युक्तस्येश्वरविषयत्वावश्यम्भावादिति ज्ञेयम् । तर्हीदमेव वाक्यमलम् , ''स्थाणुमन्ये'' इति शेषोदाहरणं किमर्थमिति चेत्सत्यम् । सुप्तेषु करणेष्वित्यर्थमुक्त्वा जीवो जागर्तीत्यापादयन्तं प्रति सुप्तो जीव एव पूर्वम् । तस्यैव प्रस्तुतत्वादिति जीवप्रसञ्जनायेत्यर्थः । जीवप्रसञ्जनाय तस्यापि वक्तव्यत्वात् ॥ १.१.२० ॥

**वे.भा-** अनेकरूपां ''विचित्राम्'' इत्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे- **अनेकरूपामिति** ॥ अनेकरूपशब्दस्य सुवर्णवाचित्वेऽभिधानमाह-

**बहुरूपमिति ॥** बहुशब्दोऽनेकपरः । अस्त्वनेकरूपशब्दः सुवर्णवाची तथापि प्रकृते सुवर्णपर इति कुत इत्याशङ्कां परिहरन् ''स चापि तत्प्रत्यवदद्यथोक्तम्'' इत्यारभ्य ''शृङ्कां चेमामनेकरूपां गृहाण'' इत्यन्तवाक्यव्याख्यानरूपां स्मृतिं पठति- **यम इति ॥** शृङ्कामित्यनुवादेन कण्ठमालामिति व्याख्यानम् । अनेन शृङ्कां ''शब्दवतीम्'' इत्येतदपव्याख्यानमित्युक्तं भवति । एवं स्वर्ग्याग्निप्रकरणं तदन्तर्गतभगवत्परमित्यागमेन साधितम् । इदानीं आन्तरोपपत्तिभिश्च तत्साधयति- **लोकादिरित्यादिना ॥** यद्वा नन्वस्त्वेतत्प्रकरणं विष्णुपरम् । प्रसिद्धाग्निपरमपि किन्न स्यात् । उभयपरत्वे बाधकाभावात् । नच सर्वेषां शब्दानां भगवन्नामत्वेनाग्निशब्दस्यापि भगवद्वाचकत्वादन्यत्रावृत्तिः समाकर्षन्यायेनान्यत्रापि शब्दस्य वृत्त्यङ्गीकारादित्यत आह- **लोकदिरिति ॥** आदिपदेन गुहानिहितत्वजन्ममृत्यूत्तरणादिमोक्षहेतुज्ञानविषयत्वादीनां ग्रहणम् । चशब्देनोक्तागमसमुच्चयः । भगवानेव एतत्प्रकरणप्रतिपाद्य इति शेषः । एवशब्देनाग्निव्यावृत्तिः । सत्यमन्यत्रापि शब्दप्रवृत्तिरङ्गीक्रियत इति । तथापि यत्रान्यग्रहणे बाधकाभावस्तत्रैव । यथा ''अव्यक्तात्पुरुषः परः'' इत्यादौ अव्यक्तादिशब्दानां प्रकृत्यादिपरत्वम् । यत्र बाधकसद्भावस्तत्र भगवान्मात्र-परत्वम् । यथा ''जीवाद्भवन्ति भूतानि'' इत्यादौ जीवादिशब्दानाम् । ततश्च प्रकृतेऽपि एतत्प्रकरणस्याग्निपरत्वाङ्गीकारे बाधकसद्भावाद्भगवानेवात्र प्रतिपाद्यः । लोकादित्वादीनां भगवत्येव सम्भवादग्नावसम्भवादिति भावः । नन्वेतेषां विशेषणानां भगवत्परत्वमेव कुत इति चेन्न । उदाहृतवचनैस्तथा व्याख्यातत्वात् । किञ्च-

**कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।**
**स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा ..................... ॥**

इत्युत्तरमन्त्रे ''अनन्तलोकाप्तिमथो प्रतिष्ठाम्'' इत्याद्यत्रोक्तमेव परामृश्यते । ''जगतः प्रतिष्ठाम्'' इत्यनेन ''अथो प्रतिष्ठाम्'' इत्यस्य, ''क्रतोरानन्त्यम्''

इत्यनेन ''अनन्तलोकाप्तिम्'' इत्यस्य, ''अभयस्य पारम्'' इत्यनेन ''तरति जन्ममृत्यू'' ''शान्तिमत्यन्तमेति'' इत्यादेः, ''स्तोम महत्'' इत्यनेन ''ब्रह्मजज्ञम्'' इत्यस्य, ''प्रतिष्ठाम्'' इत्यनेन ''मोदते स्वर्गलोके'' इत्यस्य परामर्शात् । तत्र चैतानि ह्युरुगायविशेषणानि कथ्यन्ते । अतोऽत्रापि ''अनन्तलोकाप्तिम्'' इत्यादीनि भगवत एव विशेषणानि नाग्नेरित्याह- **स्तोमेति** ॥ इति वाक्ये प्रतिष्ठात्वनन्तलोकाप्तित्वादीनामिति शेषः । यद्यप्यादित एवोदाहर्तव्या । तथापि कामस्याप्तिमित्यनेन कस्याप्यपरामर्शात्पूर्वार्धे उरुगायपदाभावात्सर्वोदाहरणे गौरवप्रसङ्गाच्चैतदेवोदाहृतम् । ननु ''जगतः प्रतिष्ठाम्'' इत्यादीनां उरुगायविशेषणत्वेऽपि भगवद्विशेषणत्वं कुत इति चेन्न । ''विचक्रमाणस्त्रेधोरुगायः'' (ऋ.सं.१.१५४.१) ''अत्राह तदुरुगास्य वृष्णः परमं पदमवभाति भूरि'' (ऋ.सं.१.१५४.६) ''यः पार्थिवानि त्रिभि-रिद्धिगामभिरुरुक्रमिष्टोरुगायाय जीवसे''(ऋ.सं.१.१५५.४)इति विष्णुसूक्ते, ''ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते'' (ऋ.सं.१०.१०९.७) ''त्वं विष्णुरुरुगायो नमस्यः'' (ऋ.सं.२.१.३) इति श्रुत्यन्तरे, ''श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः'' (भाग.२.९.१४) इति भागवते चोरुगायशब्दस्य भगवत्येव प्रसिद्धत्वेन तेषामुरुगायविशेषणत्वे भगवद्विशेषणत्वस्यैव प्राप्तेरित्याह- **भगवत इति** ॥ हिशब्दो हेतौ । यदुक्तमित्यादिविशेषणैरित्यनेन गुहानिहितत्वविशेषणेन भगवानेवेति तदयुक्तम् । जाठराग्निरूपेणाग्नेरपि गुहानिहितत्वसम्भवात् । अग्नेरपि देवत्वेन शरीरत्वाच्च तत्सम्भवः । तर्त्कि भगवत इत्यत आह- **गुहेति** ॥ तस्यैव भगवत एव । प्रसिद्धं ''यो वेद निहितं गुहायाम्'' (ब्र.व.१) इत्यादिषु । ''हृदि ह्येष आत्मा'' (षट्.उ.३.६) इति जीवेऽपि हृद्गुहानिहितत्वप्रसिद्धेर्विशेषत इत्युक्तम् । सत्यम् । अग्नेरपि हृद्गुहानिहितत्वं प्रसिद्धमिति । तथापि विशेषतः श्रुत्यादौ भगवत एव प्रसिद्धम् । विशेषतः प्रसिद्धमेव हि ग्राह्यम् । नहि मैथिलः

पाञ्चाल इत्युक्ते यः कोऽपि मिथिलायां पाञ्चालेषु वा भवो गृह्यते । किन्तु प्रसिद्धस्तदधिपतिरेवेति भावः । एवं प्रतिष्ठाब्रह्मजज्ञानन्तलोकाप्तिरित्यादि विशेषणानां भगवत्परत्वमुपपाद्यान्यत्रासम्भवप्रदर्शनायोपलक्षणत्वेनानन्त-लोकाप्तिरिति विशेषणस्याग्नावसम्भवं दर्शयति- **नचेति** ॥ भगवदधिष्ठान-त्वादिनाग्निपरिज्ञानस्यापि मोक्षहेतुत्वान्मात्रपदम् । तद्व्यवच्छेद्यमाह- **भगवज्ज्ञानं विनेति** ॥ ननु भगवज्ज्ञानाभावेऽपि अग्निपरिज्ञानपूर्वकं यज्ञादिकरणेनानन्तलोकाप्त्युपपत्तेरग्नावप्यनन्तलोकाप्तित्वं सावकाशमित्यतः तदभावे श्रुतिमाह- **तद्वा इति** ॥ हे गार्गि तदेतदक्षरमविदित्वा यदस्मिन् लोके जुहोति वैश्वदेवादिकान् होमान् करोति, यजते अश्वमेधादियज्ञांश्च करोति, बहूनि वर्षसहस्राणि तपस्तंप्यते अस्य भगवदज्ञानिनः तत् होमादिकं सर्वं अन्तवदेवान्तवत्फलमेव भवतीत्यर्थः । जुहोति ददाति, यजते यज्ञादिकं करोतीति वा, जुहोति यज्ञादिकं करोति, यजति ददातीति वार्थः । नन्वग्निपरिज्ञानमात्रेणाप्यनन्तलोकाप्तिरस्त्येव, मोक्षप्राप्तेरभावेऽपि स्वर्गप्राप्तेः सत्त्वात् । नचास्यानन्तत्वाभावः । बहुकालावस्थानमात्रेण तथा व्यवहारोपपत्तेरित्यत आह- **नचेति** ॥ सति सम्भवतीत्यर्थः । अनन्तलोकशब्दस्य मोक्षो हि मुख्यार्थः । स्वर्गस्त्वमुख्यार्थः । नहि बाधकाभावेन मुख्यार्थे सम्भवत्यमुख्यार्थो युज्यत इत्यर्थः । नन्वस्त्वनन्तलोकशब्दो मोक्षपर एव । तथाप्यग्निपरिज्ञानस्यानन्तलोकाप्ति-साधनत्वमस्त्येव । साक्षान्मोक्षसाधनत्वाभावेऽपि परम्परया तत्साधनत्वादित्यत आह- **नचेति** ॥ मुख्ये साक्षात्साधनत्वे । नन्वनन्तलोकाप्तिरिति विशेषणस्याग्नावसम्भवेऽपि लोकादिरित्यादिविशेषणानि सम्भवन्त्येव । तथाहि । लोकानामादिः प्रथमशरीरत्वात् । प्रतिष्ठा जगत आश्रयः । ब्रह्मजो हिरण्यगर्भजः ज्ञः सर्वज्ञश्चेति ब्रह्मजज्ञो गुहानिहितो विदुषां बुद्धौ प्रविष्ट इति । तत्कथमेतैर्विशेषणैर्भगवानेवात्र प्रतिपाद्य इति निश्चय इति चेन्न । अग्नेरपि

मुख्यतो लोकादित्वविशेषणासम्भवात् । यथाकथञ्चित् सम्भवतीति चेत् तत्राह- **नचेति** ॥

"येयं प्रेते" इति तृतीयप्रश्नवाक्यस्थेयं विचिकित्सा संशयः । प्रेते मनुष्ये अस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसम्बन्ध्यात्मेत्येके । नायमेवं विधोऽस्तीत्येके । अत्र चास्माकं न प्रत्यक्षेण नाप्यनुमानेन निर्णयो युज्यते" इति व्याख्यानमसदिति भावेन स्वयं तद्वाक्यं व्याचष्टे- **प्रेत इति** ॥ प्रेतशब्दस्य मृतसामान्यवाचकत्वेऽपि तद्विशेषः मुक्तोऽत्र ग्राह्य इति भावेन मुक्त इत्युक्तम् । मनुष्यशब्दश्चेतनपरः । अज्ञानामपि केषाञ्चिन्मते भगवतो व्याप्तत्वाङ्गीकारेण मुक्ते मनुष्ये आकाशादिवत्सत्त्वमात्रमङ्गीक्रियत इत्यतो नियामकत्वेनेत्युक्तम् । नास्तीत्यज्ञा इत्यनेन ज्ञानिनामेवायं विवाद उच्यत इति यथाश्रुतप्रतीतिरपि परास्ता । एवं वदतां ज्ञानित्वाभावात् । ननु मुक्तनियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति नास्तीत्यज्ञा इति जानतो नचिकेतसः संशयो निवृत्त एव । ज्ञानिमतस्यैव ग्राह्यत्वेन मुक्ते नियामकतया भगवानस्तीत्येव सिद्धत्वात् । अत एतद्विद्यामिति किं प्रार्थ्यत इत्यतस्तद्व्याचष्टे- **तस्येति** ॥ एतच्छब्दार्थस्तस्य नियामकस्य स्वरूपमिति । तस्य संशयविषयीभूतस्येत्यर्थः । नात्र नचिकेतसा मुक्ते नियामकतया भगवानस्ति नवेति संशयसत्वात् तन्निर्णयः कथमिति प्रार्थ्यते किन्तु मुक्ते नियामकत्वेन भगवानस्तीति सिद्धमेव । तस्य नियामकस्य स्वरूपं यथावद्विद्यामित्येव प्रार्थ्यते अतो नानुपपत्तिरित्यर्थः । ननु कुत एवं व्याख्येयं परोक्त एवार्थः किन्न स्यादित्यतस्तज्ज्ञापकमाह- **अस्येति** ॥ "किमत्र परिशिष्यते" इत्यतः परमेतत्प्रश्नविषयस्यैवानुवादादिति शेषः । तेन चशब्दोपपत्तिः । "येयं प्रेते विचिकित्सा" इत्यत्रोक्तस्यैवोत्तरत्र "अस्य विस्रंसमानस्य" इत्यनेनानुवादे सत्येतदित्यनेन यत्पृष्टं तदेतदिति प्रतिज्ञाय "न प्राणेन नापानेन" इत्यादिना जीवनहेतुत्वादिना भगवत्स्वरूपस्यैवोक्तत्वादत्रापि मुक्तस्थो भगवान् पृच्छ्यत

इति सिद्धमित्यर्थः । स्यादेतत् । यदि ''अस्य विस्रंसमानस्य'' इत्येतदेवं मुक्तपरं स्यात् । तदेव कुत इत्यत आह- **देहादिति** ॥ अन्यथा विशब्दवैयर्थ्यादिति भावः । नन्वथाप्यस्य प्रश्नवाक्यस्य मुक्तविषयत्वं नोपपद्यते । ''नचिकेतो मरणं मानुप्राक्षीः'' इति मरणविषये प्रश्नो न कर्तव्य इत्युक्त्या प्रश्नवाक्यस्य मरणविषयत्वप्रतीतेरित्यत आह- **मुक्तेरपीति** ॥ भवत्युपपद्यते । यदुक्तं देहाद्विशेषेण मोचनं नाम मुक्तिरेवेति तदयुक्तम् । ''देहाद्विमुच्यमानस्य'' इत्यस्य स्थूलशरीरं त्यजत इत्यर्थोपपत्तेरिति चेन्न । ''विस्रंसमानस्य'' इत्यनेनैवास्यार्थस्योक्तत्वेन पौनरुक्त्यापातादिति भावेनाह- **स्थूलेति** ॥ व्याख्यानव्याख्येयभावस्त्वगतिकागतिरिति भावः । यदुक्तं द्वितीयतृतीययोरुभयोरपि प्रश्नयोर्भगवद्विषयत्वमिति तदयुक्तम् । तथा सति द्वितीयप्रश्नस्य झडिति परिहाराभिधानं तृतीयप्रश्नस्य त्वतिकृच्छ्रेण परिहाराभिधानमिति विशेषासम्भवात् । नच उभयोरपि प्रश्नयोः भगवद्विषयत्वे एकस्य झटिति परिहाराभिधाने अपरस्य कृच्छ्रेण तदभिधाने कारणमस्तीत्यतस्तत्र कारणविशेषं प्रमाणेनाह- **अग्निस्थमिति** ॥ अग्निस्थस्यैव परमात्मनो वक्ष्यमाणविशेषणप्रकारकज्ञानं भवत्येव मोक्षहेतुरत उक्तम्- **सामान्यादिति** ॥ तुशब्दो अवधाराणार्थः । सामान्यादेवेति सम्बन्धः । चशब्दात्संसारे च जीवान्तस्थत्वं नाकाशसाधारण्येनेत्याह- **नियामकश्चेति** ॥ तथा हरेस्सर्वोत्तमत्वादीन् गुणान् ''इन्द्रियेभ्यः परा ह्यर्थाः'' इत्यादिनोक्तानविज्ञाय स्थितस्य नैव मुक्तिर्भवेदित्यर्थः । अत एव यमेन ''तं दुर्दर्शं गूढमनुप्रविष्टम्'' इत्यादिना वक्ष्यमाणविद्याप्रशंसा क्रियते । मुक्तजीवनियामकहरिज्ञानमन्तरेण मोक्षप्राप्त्यभावेऽपि तद्रूपं किमिति कृच्छ्रेण वक्तव्यमित्यत आह- **तस्येति** ॥ तर्ह्यग्निस्थभगवन्निरूपणं पृथङ्न कार्यं स्यात् । तज्ज्ञानस्य मुक्तिसाधनत्वाभावेन व्यर्थत्वादित्यत आह- **तथापीति** ॥ संसारनिवृत्तिलक्षणमोक्षहेतुत्वाभावेऽपीत्यर्थः । एवञ्च ''अमृतत्वं भजेत्क्रमात्''

इति पूर्वत्रामृतत्वशब्दो मौक्तसुखाधिक्यपरतया व्याख्येय इति न तद्विरोध इति मन्तव्यम् । अनेन परव्याख्याने जीवस्यातिगोप्यत्वाभावात्कृच्छ्रेण परिहारोक्तिर्न स्यादिति बाधकं सूचितम् । ईश्वरविषय एव तृतीयप्रश्न इत्यत्र ज्ञापकान्तरमाह- **स्थाणुमिति ॥** "य एषु सुप्तेषु" इत्युत्तरवाक्ये जीवेषु स्थितस्य भगवत एव कथनात् प्रश्नवाक्येऽपि जीवेषु स्थितो भगवानेव विषय इति वक्तव्यम् । अन्यथा प्रश्नोत्तरयोरनानुगुण्यापातात् । नच "य एषु सुप्तेषु" इत्यस्य जीवपरत्वं कुत इति वाच्यम् । "स्थाणुमन्ये नु संयन्ति" इत्यव्यवहितपूर्ववाक्ये जीवानां प्रस्तुतत्वेन तेषामेव एषु इत्यनेन परामर्शादित्यर्थः । "य एषु सुप्तेषु" इत्यत्र संसारिजीवस्थब्रह्मस्वरूपं निरूप्यते । प्रश्नवाक्ये तु मुक्तस्य नियामको हरिर्विषयस्तथाच प्रश्नपरिहारयोरनानुगुण्यमेवेत्यतो जीवेष्विति सामान्येनोक्तम् । मुक्तामुक्तजीवमात्रस्थितभगवतः प्रश्नविषयत्वा-दत्रामुक्तजीवस्थभगवन्निरूपणं न प्रश्नाननुगुणमिति भावः । नन्वेतत्पूर्वोत्तर-विरुद्धम् । मुक्ते स्थितो भगवान् पृच्छ्यत इति प्रागुक्तम् । इदानीं जीवेषु स्थितो भगवान् पृच्छ्यत इत्युच्यते इत्यतस्तं विरोधं प्रश्नवाक्याभिप्रायकथनेन परिहरति- **मृतेति ॥** विवक्षितो "येयं प्रेते" इति प्रश्नवाक्य इति शेषः । प्रेतशब्दस्य उभयसाधारणत्वादिति भावः । न केवलं प्रश्नानानुगुण्याभावः । किन्तु विरोधश्च नास्तीति चशब्दार्थः । यद्वा यदि "येयं प्रेते" इत्यत्र मुक्तनियामकभगवत्स्वरूपं प्रश्नविषयः स्यात् तर्हि-

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा मरणं प्राप्यात्मा भवति गौतम ॥**

इति म्रियमाणजीवस्थभगवत्स्वरूपवचने प्रतिज्ञा विरुद्धा स्यात् । पृष्टस्यैव वक्तव्यत्वादिति चेन्न । मुक्तेरपि मरणात्मकत्वादित्युक्तन्यायेन मरणं प्राप्येति मरणशब्दस्यापि मुक्तिपरत्वोपपत्तेर्विरोधाभावात् । प्रकारान्तरेणाप्य-विरोधमाह- **मृतजीव इति ॥** पूर्वोक्तपरिहारसमुच्चयार्थश्चशब्दः । अविरोधो

मरणं प्राप्येति वचनस्य प्रश्नवाक्येनेति शेषः । ननु यदुक्तं ''य एषु सुप्तेषु'' इतिवचनात्प्रश्नवाक्यस्य भगवद्विषयत्वमिति । तदसत् । तस्यैव वाक्यस्येश्वर-विषयत्वाभावात् । नहि तत्रेश्वरज्ञापकं किञ्चिदस्तीति चेन्न । सुप्तेषु जागर्तीतीश्वरलिङ्गश्रवणात्स्वाप्नपदार्थनिर्मातृत्वश्रवणाच्च । नच तत्र निर्मातृत्व-मात्रश्रवणेऽपि स्वाप्नपदार्थनिर्मातृत्वं न श्रूयत इति वाच्यम् । ''भुञ्जानो नोत्सृजेद्वाचम्'' इत्यादाविव प्रकरणप्राप्तत्वात् । ''हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्'' इति प्रतिज्ञातस्यैवात्र कथनाच्च । ''तदेव शुक्रं तद्ब्रह्म'' इति वाक्यशेषाच्च । ननु वाक्यशेषे यो जीवः एषु प्राणेषु सुप्तेषु कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्ममाणो जागर्ति न स्वपिति तदेव शुक्रं शुद्धं ब्रह्म नान्यत् गुह्यं ब्रह्मास्तीति ब्रह्मैक्यमेव जीवस्योच्यत इति कथं तत्साधकं इति चेन्न । तस्य दूष्यत्वात् । ''तस्मिंल्लोकाः श्रिताः सर्वे'' इत्युक्तविशिष्टे जीवैक्यानङ्गीकाराच्च । लक्षणा चागतिकागतिः । किञ्च ''एषु सुप्तेषु'' इत्यत्रैतच्छब्देन ''स्थाणुमन्ये'' इत्यव्यवहितपूर्ववाक्यप्रकृतजीवपरामर्श इत्येव युक्तम् । नतु सर्वात्मना अप्रकृतप्राणपरामर्श इति । नच ग्रन्थप्रकृतपरामर्शो सम्भवति बुद्धिस्थपरामर्शोऽयुक्तः । अत एवोक्तं ''स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्'' इत्युक्त्वेति ।

ननु हन्त त इदं प्रवक्ष्यामि इति प्रतिज्ञावाक्ये गुह्यं सनातनं ब्रह्म स्वाविद्यया मरणं प्राप्य आत्मा संसारी यथा भवति तथा प्रवक्ष्यामि इत्युक्तत्त्वेनात्रापि तदेव बोध्यत इति व्याख्येयमिति चेन्न । मरणं प्राप्येत्यस्य म्रियमाणं जीवं प्राप्येत्यर्थोपपत्तेरिति भावेन श्रुत्यर्थनिश्चायकं प्रमाणमाह-**गुह्यमिति** ॥ अपिशब्दौ चशब्दार्थौ वाक्यद्वयार्थसमुच्चयार्थौ । यद्वा म्रियमाणमपीत्यन्वयः । तेन जायमानमित्यस्य समुच्चयः । एतेन ''गुह्यं तत्परमं ब्रह्म'' इत्यारभ्य ''योनिमन्ये'' इत्यादेस्तात्पर्यमुक्तम् । ''स्वपितेष्वपि जीवेषु जागर्ति'' इत्यनेन ''य एषु सुप्तेषु'' इति वाक्यार्थ उक्तो भवति ।

''सुप्तेषु जीवेषु'' इत्युक्त्या ''एषु प्राणेषु'' इत्येतदपव्याख्यानमित्युक्तं भवति । न केवलं जागरितेषु सुप्तेष्वपीत्यपि शब्दः ॥ १.१.२० ॥

**वे.खं-** एवमुक्तो नचिकेताः तृतीयं वरं वृणोति- **येयमिति ॥** प्रेते मुक्ते मृते वा मनुष्येऽयं भगवान्नियामकत्वेनास्तीत्येके ज्ञानिनो वदन्तीति शेषः । नास्तीत्यज्ञा वदन्ति । अतो विप्रतिपत्तेर्विचिकित्सा संशयोऽस्ति । किमिति ? प्रेते मनुष्येऽयं भगवान्नियामकत्वेनास्ति नवेति । किं ततः । इयं विचिकित्सा या यद्विषया एतत् संशयविषयीभूतस्य मुक्तामुक्तनियामकस्य स्वरूपम् । त्वयानुशिष्टो यथावद्विद्यां जानीयाम् । एष एव त्वद्दत्तानां वराणां मध्ये तृतीयो वरो वृतो मया प्रार्थितः ॥ १.१.२० ॥

**वरद-** तृतीयवरस्वीकारार्थं पृच्छति- **येयं प्रेतेत्यादि ॥** तत्र प्रश्नवाक्याभिप्रायमाह- **प्रेत इति ॥** नन्वस्य प्रश्नवाक्यस्य मुक्तजीवे हरिर्नियामकत्वेन वर्तते नवेत्येवमेवार्थ इत्येतत्कुत इत्यत्राह- **अस्येति ॥** अत्रैवोपदिष्टादस्य जीवस्य विस्रंसमानस्य देहवियोगवतः देहाद्विमुच्यमानस्य विशेषेण मुच्यमानस्य मुक्तस्य सत इति यावत् । अस्मिन्मुक्ते नियामकत्वेन किं ब्रह्म परिशिष्यते किं वा न परिशिष्यते इति प्रश्नानन्तरं परिशिष्यत एवेति परिहारवचनात् प्रागपि प्रश्नवाक्ये मुक्ते स्थितो विष्णुर्विचार्य इति सिद्धमित्यर्थः । नन्वस्मिन्वाक्ये मुक्तविषयत्वज्ञापकं किमस्तीत्यत आह- **देहादिति ॥** नन्वथाप्यस्य प्रश्नवाक्यस्य मुक्तविषयत्वं न सङ्गच्छते । ''नचिकेतो मरणं मानुप्राक्षीः'' इति मरणविषये प्रश्नो न कर्तव्य इति प्रश्नवाक्यस्य मरणविषयत्वप्रतीतेरित्यत आह- **मुक्तेरपीति ॥** ननु देहाद्विमुच्यमानस्येत्येतत्पदबलेन मुक्तविषयत्वं कल्पयितुं शक्यते देहाद्विमुच्यमानस्येत्यस्य म्रियमाणस्येत्यर्थोपपत्तेरित्यत आह- **स्थूलेति ॥** ननु द्वितीयतृतीयप्रश्नयोरुभयोरपि परमात्मविषयत्वमिति यदुक्तं तन्न युज्यते । तथात्वे द्वितीयचोद्यस्य झटिति परिहाराभिधानं तृतीयस्य त्वतिकृच्छ्रेणेति

विमुक्तजीवनियामकं विष्णुरूपं किमिति कृच्छ्रेण कथनीयमित्यत आह- **तस्येति** ॥ ननु मुक्तजीवनियामकहरिरूपविज्ञानं चेन्मुक्तिसाधनं तर्हि अग्निस्थहरिरूपनिरूपणं किमर्थं कर्तव्यम् । तस्य मुक्तिसाधनत्वाभावादित्यत आह- **तथापीति** ॥ केचित्तु ''येयं प्रेते विचिकित्सा'' इत्यस्यैवमर्थमाहुः । कथं प्रेते मृते जीवे येयं विचिकित्सा सन्देहः मृतं जीवमुद्दिश्य योऽयं संशय इति यावत् । कथमस्तीत्येके एके वैशेषिकादयः । अयं जीवो मरणानन्तर-मप्यस्तीत्याहुः । एके चार्वाकादयस्तु मरणसमये जीवोऽपि नश्यति मरणानन्तरं त्वयं जीवः नास्तीत्याहुः । एतदहं ज्ञास्यामीति तदेतद्व्याख्यानं निराकरोति- **स्थाणुमिति** ॥ अत्र हि ''हन्त त इदं प्रवक्ष्यामि'' इत्यारभ्य परिहारवाक्ये ''स्थाणुमन्येऽनु संयन्ति यथाकर्म यथाश्रुतम्'' इति प्राणिनां कर्मज्ञानानुसारेण स्थावरजङ्गमभावः प्रतिपादितः । तदनन्तरं तु तेषु जीवेषु स्वप्नावस्थानिर्मातृत्वेन जीवान्तर्नियामकत्वेन भगवत्स्वरूपं निरूप्यते । अतः परिहाराननुगुण्यात् चोद्यवाक्यस्याप्येवमेवार्थः कल्पनीय इति भावः । ननु ''य एषु सुप्तेषु जागर्ति'' इत्यत्र संसारिजीवेषु नियामकतया ब्रह्म निरूप्यते । प्रश्नवाक्ये तु मुक्तजीवे हरिर्नियामकतया वर्तते उत नेति विचार्यते अतः प्रश्नाननुगुणमिदं मुक्तजीवे ब्रह्मणोऽवस्थानकथनमित्यत आह- **मृतेति** ॥ ''य एषु सुप्तेषु जागर्ति'' इत्यस्य विष्णुविषयत्वे वचनान्तरसंवाद-मप्याह- **गुह्यमिति** ॥ १.१.२० ॥

**रा.खं-** तृतीयवरवरणप्रकारमाह- **येयमिति** ॥ प्रेते मृतपुरुषे मुक्ते च मनुष्ये नियामकत्वेन भगवानस्तीति एके ज्ञानिनो वदन्ति । नास्तीत्यज्ञाः । अतो विप्रतिपत्तेः मम जाता येयं विचिकित्सा सन्देहः एतद्विचिकित्साविषयं मृतमुक्तजीवयोः प्रेरकस्वरूपमहं त्वयाऽनुशिष्टः सन् उपदिष्टस्सन् विद्यां जानीयाम् । वराणां मध्ये एष वरः विचिकित्साविषयमृतमुक्तप्रेरक-स्वरूपोपदेशनप्रार्थनरूपः तृतीयो मया वृत इति नचिकेता यममुवाचेति योज्यम् ॥ १.१.२० ॥

· उपनिषत्

**देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयोऽणुरेष धर्मः ।**
**अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैवम् ॥**
**॥१.१.२१ ॥**

भाष्यम्

**धारकत्वाद्धर्मो भगवान् ॥ १.१.२१ ॥**

**वामन-** अथ यमस्तं प्रत्याह– **देवैरत्रापीति** ॥ अत्र त्वद्विचारणविषये पुरा देवैरपि विचारितम् । नहि भगवतः स्वरूपं तैरपि सुज्ञेयमभूत् । यतः सर्वधारकत्वात् धर्मनामको भगवान् अणुः अतिसूक्ष्मः । तस्मादिमं विना अन्यं वरं वृणीष्व । ''मा मोपरोत्सीः'' इत्यत्र प्रथमो माशब्दो निषेधवाचकः । अन्यस्तु मामिति द्वितीयैकवचनस्याऽदेशरूपम् । नहि विपर्ययेण । आदेशस्वरूपस्य ''अनुदात्तं सर्वमपादादौ''(सि.कौ.४०३) इति पादादौ प्रयोगनिषेधात् । इममेव वरं वृण इत्युक्त्वा मां प्रत्युपरोधं मा कृथा इत्यर्थः । अत एनं वरं मामुद्दिश्य त्वं देहीति शब्दयोजना । अथवा सृज विसृजेत्यर्थः । एनमननुरोधाख्यम् ॥ १.१.२१ ॥

**वे.भा-** ननु ''एतद्विद्यामनुशिष्टस्त्वयाहम्'' इति नचिकेतसा जीवगतभगवत्स्वरूपे पृष्टे ''नहि सुज्ञेयोऽणुरेष धर्मः'' इति यमेन धर्मस्याणुत्वेन सुज्ञेयत्वाभावकथनं असङ्गतम् । नहि धर्मस्वरूपं नचिकेतसा पृष्टमित्यतो धर्मशब्दं व्याचष्टे- **धारकत्वादिति** ॥ सर्वं जगद्धत्त इति धर्मः । ''पृथिवी धर्ममूर्धनि'(गी.भा.९.२) इतिप्रयोगान्मोक्षधर्मे, ''धर्मो वा इदमग्र आसीत्' (गी.भा.९.२) इत्यादिश्रुतेश्चेति भावः ॥ १.१.२१ ॥

**वे.खं-** एवमुक्तो यमो मुक्तामुक्तजीवनियामकभगवज्ज्ञानमेव मोक्षसाधनं तच्चातिगोप्यं अतः श्रोतुर्बुद्धिदार्ढ्याभावे न वक्तव्यमिति भावेन तद्बुद्धिपरीक्षणाय

तस्य दुर्ज्ञेयत्वमाह- **देवैरिति** ॥ हे नचिकेतः पुरा पूर्वम्, अत्र मुक्तामुक्त-जीवनियामकभगवद्विषये, देवैरपि विचिकित्सितम् । कुतः हि यस्मादेष धर्मः धारकत्वाद्धर्मनामा भगवान् सुज्ञेयो न । कुतः यतोऽणुः सूक्ष्मः तस्मादन्यं वरं वृणीष्व । मा मां मोपरोत्सीरिदमेव वक्तव्यमित्युपरोधं माकार्षीः मा मां प्रति एनं वरं अतिसृज विमुञ्चेत्यर्थः ।। १.१.२१ ।।

**वरद-** ''नहि सुज्ञेयोऽणुरेष धर्मः'' इत्यत्र धर्मशब्दस्य विवक्षितार्थमाह- **धारकत्वादिति ॥** १.१.२१ ।।

**रा.खं-** एवं नचिकेतसा प्रार्थितो यमः, ''अणोरणीयान्'' इत्यादिना द्वितीयाध्याये मुक्तजीवनियामकस्वरूपम्, ''यथा मरणं प्राप्य'' इत्यादिना पञ्चमे मृतजीवनियामकं च वक्ष्यन् तृतीयप्रश्नविषयप्रेतस्थेश्वरस्वरूपस्याति-दुर्ज्ञेयत्वादिमाहात्म्यमाह- **देवैरिति** । यद्यपि प्र ते ब्रवीमीत्यादिनोक्त-द्वितीयवरोक्तिरपि इष्टकाचिताग्निस्थभगवद्विषयैव, अथापि तज्ज्ञानेन मुक्तौ सुखातिशयो न तु मुक्तिः । सा तु प्रेतप्रेरकतद्गुणादिमाहात्म्यज्ञानादेवेति अस्य दुर्ज्ञेयत्वोक्तिः । देवैरप्यत्र त्वत्कृतप्रश्नविषये पुरा पूर्वं विचिकित्सितं सन्दिग्धमासीत्, तेऽपि सन्देहवन्तोऽभवन् । कुतः ? न हि सुज्ञेयः, हि यतः सुखेन ज्ञेयो न भवति । तत्किमित्यत आह- **अणुरेष धर्म इति** । अणुः सूक्ष्मः अव्यक्तस्वभावः, धारकत्वाद्धर्मो भगवान्, ''धृ धारणे'' मप्रत्ययः, अतः कारणात्, हे नचिकेतः, अन्यं वरं प्रेतनियामकोपदेशवरादन्यं वरं वृणीष्व । मा माम्, मोपरोत्सीः, उपरोधं एतत्प्रश्नविषयं ब्रूहीति निर्बन्धं न कुर्विति यम उवाचेत्यर्थः । एवं यमेनोक्तो नचिकेता वक्ति- **माऽतिसृजैवमिति** । एवमुक्तप्रकारेण माऽतिसृज अतिसर्जनं परित्यागं मा कार्षीः ।। १.१.२१ ।।

उपनिषत्

**देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो**
**यन्न सुज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न**
**लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥**
**॥१.१.२२॥**

**वामन-** नचिकेताः "देवैः..." इत्यादिना यमेनोक्तमेवानूद्य देवैरपि विचिकित्सितत्वादिना सर्वतो वैशिष्ट्यं दुर्लभत्वं च प्रतिपाद्य "नान्यो वरस्तुल्य एतस्य कश्चित्" इत्याह ॥ १.१.२२ ॥

**वे.खं-** एवमुक्तो नचिकेता आह- **देवैरिति** ॥ हे मृत्यो त्वमेव यत् यस्मात् देवैरपि अत्र विचिकित्सितम्, किलेति पुरावृत्तद्योतनार्थः । अत एव भगवत्स्वरूपं सुज्ञेयं न भवतीत्यात्थ । तस्मात्स एव वरो मयार्थितो नान्यः । कुत इत्यत एतत्सदृशस्याभावादित्याह- **नान्य इति** ॥ अयमेव वरोऽन्यस्मात्सम्पाद्यतामित्यत आह- **वक्ता चेति** ॥ १.१.२२ ॥

**रा.खं-** कुतः ? हे मृत्यो त्वं च त्वमपि यत् यस्माद्देवैरप्यत्र विचिकित्सितं सुज्ञेयं च नेति आत्थ वदसि । वक्ता च त्वादृगन्यः अस्य मत्प्रश्नविषयस्य न लभ्यः । एतस्य कश्चित् तुल्यो वरोऽन्यो नास्ति । तस्मादेतदेव ब्रूहीत्यर्थः ॥

उपनिषत्

**शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून्**
**हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व**
**स्वयं च जीव शरदो यावदिच्छसि ॥१.१.२३॥**

**व्यास-** नानाप्रलोभैः अलुब्ध एव अस्यां विद्यायां अधिकारीति भावेन यमो गुह्यं वरं याचमानं प्रलोभयति- **शतायुष इत्यादिना** ॥ हस्तिहिरण्यं हस्तिनः हिरण्यं च द्वन्द्वैकवद्भावः । यावज्जीवितुं इच्छसि तावतीः शरदो जीव ॥

**वामन-** यद्यन्य एको वरः परमात्मवरस्य तुल्यो नेति ते मतं तर्हि यावद्भिर्मिलितैस्तत्तुल्यतां त्वं मन्यसे तावतः सुबहूनप्यभीष्टवरान् वृणीष्वेति गुरुस्तमाह– **शतायुष इत्यादिना ॥** हस्तिनः हिरण्यानि च हस्तिहिरण्यम् । बहूनिति विशेषणसामर्थ्यात् बहुत्वं विवक्षितम् । द्वन्द्वे त्वेकवद्भावादविरोधश्च । भूमिष्ठं महदायतनं नगरादिस्थानम् । यावत् चतुर्युगान्तं मन्वन्तरान्तं वा त्वमिच्छसि तावतीः शरदो जीव ॥ १.१.२३ ॥

**वे.खं-** एवमुक्तो यमः सर्वात्मना विषयविरक्तस्यैव मोक्षशास्त्रेऽधिकार इति ज्ञापनाय नचिकेतसः स्थैर्यनिरीक्षणाय नानाविषयैस्तं प्रलोभयति- **शतायुष इत्यादिना ॥** शतं वर्षाण्यायूंषि येषां ते शतायुषस्तान् पुत्रपौत्रान् वृणीष्व । बहून् पशून् गोमहिष्यादिरूपान् । हस्ती हिरण्यञ्च हस्तिहिरण्यमिति द्वन्द्वैकवद्भावः । अश्वान् भूमेर्महदायतनञ्च भूमेरिति पञ्चमी सप्तम्यर्थे । महद्विस्तीर्णमायतनमाश्रयं महाराज्याधिपत्यमिति यावत् । वृणीष्व । न केवलं पुत्रपौत्राणामेव शतायुष्ट्वं किञ्च स्वयञ्च यावज्जीवितुमिच्छसि तावतीः शरदो जीव । सर्वमेतदनर्थकं स्वयं चेदल्पायुरित्यतो वा आह- **स्वयञ्चेति ॥** १.१.२३ ॥

**वरद.खं-** नचिकेतसः स्थैर्यनिरीक्षणार्थं विषयैस्तं प्रलोभयति यमः- **शतायुष इत्यादिना ॥** १.१.२३ ॥

**रा.खं-** नानाप्रलोभैरलुब्ध एवास्यां वक्ष्यमाणविद्यायामधिकारीति भावेन यमो गुह्यं वरं याचमानं प्रलोभयति- **शतायुष इत्यादिना ॥** शतमायूंषीत्यर्थः । शतायुष इति बहुव्रीहिर्वा, पुत्रपौत्रानित्यस्य विशेषणम् । हस्तिहिरण्यं हस्तिनः हिरण्यं च, द्वन्द्वैकवद्भावः । भूमेर्महदायतनं अतिविस्तीर्णभूखण्डम् । यावदिच्छसि यावत्कालं जीवितुमिच्छसि तावतीः शरदश्च शरदोऽपि स्वयं जीव ॥ १.१.२३ ॥

## उपनिषत्

**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च । [१]महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ १.१.२४ ॥**

**व्यास**- त्वदीयं वरमेतत्तुल्यं यदि मन्यसे तर्हि एतत् वृणीष्व । नो चेत् अन्यच्च वित्तं वृणीष्व । चिरजीविकां क्षेत्रं च वृणीष्व । एधि एधस्व ॥ शास्वेति यावत् ॥ १.१.२४ ॥

**वामन**- एतत् मदुक्तं सर्वं सम्मिलितं यदि तत्तुल्यं मन्यसे तर्हि तं वृणीष्व । यद्येतदप्यतुल्यमेव मन्यसे तर्हि पुनरप्यमितं रत्नादिवित्तं बहुमन्वन्तरं कल्पान्तमेव वेति अतिचिरजीवितं वृणीष्व । अथापि वा समुद्रपर्यन्तायां महाभूमौ चक्रवर्तिपदमधिष्ठाय वर्धस्व । तद्गतकामानां अप्रयत्नेन स्वेच्छयैव भोक्तारं त्वा करोमि ॥ १.१.२४ ॥

**वे.खं**- नन्वेवं त्वद्दत्तो वरो मृषैव जातः मत्प्रार्थितस्य त्वया अदानादित्यत आह- **एतत्तुल्यमिति** ॥ त्वदीयं वरमेतत्तुल्यं एतस्य मया दीयमानस्य समं यदि मन्यसे तर्हि दीयमानं वित्तं चिरजीविकाञ्च दीर्घजीवनहेतुक्षेत्रं दीर्घजीवनं वा उक्तोपलक्षणमेतत् । वृणीष्व । नचेदन्यदपि दास्यामीत्याह- **महाभूमाविति** ॥ हे नचिकेतः त्वं महाभूमौ निमित्तसप्तमीयम् । महाराज्याधिपत्ये सतीति यावत् । एधि अभिवृद्धो भव । त्वां कामानां काम्यानां मध्ये कामितभाजं करोमीत्यर्थः ॥ १.१.२४ ॥

**वरद.खं**- **एतत्तुल्यमिति** ॥ तव वरं यद्येतत्तुल्यं एतस्य मया दत्तस्य वित्तस्य तुल्यं समं मन्यसे तर्हि तं वरं वृणीष्व न चेत्पुनश्च वित्तं चिरजीविकाञ्च वृणीष्व महाभूमौ महाराष्ट्रभूमौ एधि तिष्ठ ॥ १.१.२४ ॥

---

१. 'महान्'' इति राघवेन्द्रस्वामिपाठः ।

**रा.खं-** एतत्तुल्यं त्वत्प्रार्थितवरतुल्यं वरं कञ्चन यदि मन्यसे तद्वा वृणीष्व । वित्तं चिरजीविकां जीवनहेतुं च वृणीष्वेत्यादरात् प्रागुक्तस्य पुनरुक्तिः । हे नचिकेतः महाभूमौ पुण्यभूमौ एधि भव । ''घ्वसोरेद्धावभ्यासलोपश्च'' (सि.कौ.२४७१) इत्यस्ते रूपम् । पुण्यभूमिजननं वा वृणीष्व । ''एध वृद्धौ'' इत्यस्य वा रूपमेतत् । वर्धस्वेत्यर्थः । महान् भूमाविति क्वचित्पाठः । तदा तु एधि भवेत्यर्थः । कामानां काम्यमानानां मध्ये त्वा त्वां कामभाजं कामितभाजं करोमि ॥ १.१.२४ ॥

### उपनिषत्

**ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामांश्छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ॥ आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनुप्राक्षीः ॥ १.१.२५ ॥**

### भाष्यम्

**मरणे स्थितं भगवन्तं माऽनुप्राक्षीः ॥ १.१.२५ ॥**

**व्यास-** कामानां मध्ये कामभाजं करोमि इत्युक्तमेव विशदमाह- **ये य इति ॥** छन्दत इच्छानुसारतः । इमा रूपादिगुणवतीः लोकस्था इति वा । परिचारयस्व सेव्यो भव ॥ १.१.२५ ॥

**वामन-** अतिमानुषानप्यनेकविधान् कामान् मत्तः सङ्ग्रहीतुमिच्छ । एवमनेकानेकभोगसम्भवं सम्भाव्य नचिकेतो मरणं मानुप्राक्षीरित्याह । अस्य वाक्यस्याभिप्रायं कथयति- **मरणे स्थितं भगवन्तं मानुप्राक्षीरिति ॥** मरणावस्थायां मुक्त्यवस्थायां च जीवनियामकत्वेन स्थितं भगवन्तमेकं न पृच्छेत्यर्थः ॥ १.१.२५ ॥

**वादि-** ''आयुषः स्वयमीश्वरत्वात्'' इत्यत्र मृत्युना ग्रासे सत्यायुषः क्षयात् अग्रासे सत्यायुषो यथावत्स्थितेश्चाऽयुषो यम ईश्वर इति भावः । ''लप्स्यामह इत्यादि विवृण्वतोक्तम्'' इत्यत्र विवृण्वता तत्राऽपातत एव त्वद्दर्शनेन सर्वप्राप्तिर्भवतीत्युक्तम् । वस्तुगत्या त्वद्दर्शने सति जातं भूमौ पुनर्भवनेन यद्वित्तादिकं तदप्यनित्यत्वान्न मम मनःप्रियमिति स्वाभिप्रायं विवृण्वतेत्यर्थः ॥

मरणस्य सर्वानुभवसिद्धत्वेन प्रश्नाविषयत्वान्नचिकेतसा मरणस्यापृष्टत्वाच्च मरणं मृतिमुद्दिश्य माऽनुप्राक्षीरिति प्रश्नं न कुर्वित्युक्तिः कथमित्यत आह- **मरणे स्थितमिति** ॥ मोक्षेतरसकलभाग्यं विनिन्दन्नचिकेताः पितृसौमनस्याख्यमैहिकफलं कुतः प्रथमं प्रार्थितवानिति चेत्तस्य ''मातृदेवो भव । पितृदेवो भव'' (तै.उ.१.२३) इत्यादिना शिक्षकैः पूर्वाचार्यैः मोक्षोपयोगितया कथ्यमानसत्कर्मसु पठ्यमानत्वेन तत्तत्प्रार्थनस्याऽवश्यकत्वात् ॥१.१.२०-२५॥

**वे.भा-** ननु ''नचिकेतो मरणं मानुप्राक्षीः'' इति यमेन मरणं न प्रष्टव्यमिति कथमुच्यते । नहि नचिकेतसा मरणं पृष्टं किन्तु मृतस्थो मुक्तस्थो वा भगवानेवेत्यतस्तदपि यथावद्व्याचष्टे- **मरण इति** ॥ म्रियमाण इत्यर्थः । एतेन ''मरणं मरणसम्बन्धिप्रश्नं प्रति अस्ति नास्तीत्येवंरूपं मानुप्राक्षीः'' इति व्याख्यानमसदित्युक्तं भवति । मरणशब्दस्य लाक्षणिकत्वापातात् । अस्मत्पक्षे तु मरणशब्दस्य तदन्तर्गतभगवद्वाचकत्वात् । प्रश्नस्य प्रश्नविषयत्वाभावेन प्रश्नं मानुप्राक्षीरित्यस्यायोगाच्चेति । किञ्च ''एतद्विद्यामानुशिष्टस्त्वयाहम्'' इत्यत्र मुक्तस्थो भगवानेव विषय इत्यङ्गीकर्तव्यम् ॥१.१.२५॥

**वे.खं-** एतदेव विवृणोति- **ये य इति** ॥ कामाः काम्याः छन्दत इच्छानुसारेण । तानेव विशिष्याह- **इमा इति** ॥ रथेन सह वर्तन्त इति सरथाः, सतूर्याः सवादित्रा इमा रूपादिगुणवतीः मल्लोकस्था वा रामा रमणीयाः स्त्रियः प्रार्थयस्व । तासु विशेषमाह- **न हीदृशा इति** ॥

तर्ह्येतादृशीभिः किं मे प्रयोजनमित्यत आह- **आभिरिति** ॥ मत्प्रत्ताभिः मद्दत्ताभिराभिः स्त्रीभिः परिचारयस्व नृत्तगानादिनात्मनः परिचर्यां कारय । हे नचिकेतः मरणं मरणे स्थितं म्रियमाणजीवस्थितं भगवन्तं मानुप्राक्षीः ॥ ॥१.१.२५॥

**वरद-** ''आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः'' इत्यत्र मरणशब्दस्य विवक्षितमर्थमाह- **मरणे स्थितमिति** ॥१.१.२५ ॥

**रा.खं-** तदेव विशदमाह- **ये य इति** ॥ मर्त्यलोके भूलोके मानुषदेहे वा । छन्दतः स्वेच्छानुसारेणेत्यर्थः । इमाः रूपशीलादिगुणवतीः । मल्लोकस्था इति वा । रामाः स्त्रियः । रामाणां विशेषणान्तरं सरथाः सतूर्याः । सोपस्करा इत्यर्थः । ईदृशी सम्पत् मनुष्यैः लम्भनीया प्राप्या न हि भवति । तस्मादुक्तसम्पदमेव प्रार्थयस्वेत्यर्थः । किं कार्यं रामाभिरित्यत आह- **आभिरिति** ॥ आभी रथाद्युपेताभिः स्त्रीभिः मत्प्रत्ताभिः मद्दत्ताभिः, हे नचिकेतः परिचारयस्व परिचर्यस्व, सेव्यो भवेति यावत् । मरणं मरणवन्तं मृतस्थभगवन्तं माऽनुप्राक्षीः नैव पृच्छेत्यर्थः । तस्यातिगोप्यत्वादिति भावः ॥ १.१.२४ ॥

**उपनिषत्**

**[१]श्वोऽभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां**
**जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव**
**वाहास्तव नृत्तगीतम् ॥१.१.२६॥**

**व्यास-** एवं प्रलोभितो नचिकेताः शतायुष इत्यादेरुत्तरमाह- **श्व इति** ॥ अन्तक मर्त्यस्य यदेतत् य एते पुत्रादयः ते श्वोऽभावाः श्वोऽसन्तः। स्वरक्षणप्रयासेन सर्वेन्द्रियाणां तेजश्च जरयन्ति । स्वयश्च जीवेत्यस्योत्तरमाह- **अपीति** ॥ सर्वमपीत्यपिशब्दसम्बन्धः इमा रामा इत्यस्योत्तरमाह- **तवैवेति**

१. ''श्वोभावाः'' इति वामनपण्डिताचार्यपाठः ।

**वामन-** एवं बोधितोऽपि नचिकेता निश्चलचेताः स्वाभिप्रायमचिन्तयन् तमाह— **श्वोभावा इत्यादि ॥** य एते भगवताभिहिताः कामभोगवराः ते सर्वे सर्वथा मृतिशीलस्याद्यतनं मरणादिक्लेशं कथञ्चित् श्वो भावयन्ति । न पुनरनन्तकालाय परिहरन्ति । अतः श्वोभावा इति यत् तस्मात् तेऽद्यप्रभृति तत्तदिन्द्रियाणां तेजः क्रमेण सर्वं जरयन्ति । अथैते स्वयमपि श्वःप्रणाशादभाव एव भवन्ति । अथो यत् पुनश्चिरजीवितं मर्त्यस्योक्तं तदपि सावधिकत्वा-दनन्तकालविवक्षयात्यल्पमेव भवति । अतोऽश्वादयोऽर्था अमर्त्यस्य तवैव तिष्ठन्तु ॥ १.१.२६ ॥

**वे.खं-** एवं प्रलोभितो नचिकेताः शतायुष इत्यादेरुत्तरमाह- **श्वोऽभावा इति ॥** हे अन्तक मर्त्यस्य मरणशीलस्य पुरुषस्य यदेतत् य एते पुत्रपौत्रपश्वादयस्ते श्वोऽभावाः श्वोऽपि न विद्यते भावः सत्ता येषां ते श्वोऽभावाः क्षिप्रविनाशा इति यावत् । न केवलमेतावत् । किन्तु स्वसद्भावदशायाञ्च सर्वेन्द्रियाणां तेजः सामर्थ्यं स्ववृद्धिक्षयचिन्तया जरयन्ति च । तस्मान्न ते मया प्रार्थ्याः । स्वयञ्च जीव शरदो यावदिच्छसि इत्यस्योत्तरमाह- **अपि सर्वमिति ॥** सर्वमपि जीवितं ब्रह्मकल्पपर्यन्तं जीवनमप्यल्पमेव । तस्यापि पर्यवसानात् । निरवधिकजीवनस्य मोक्षादन्यत्र अभावात् । तस्मात्तदपि न प्रार्थये । "इमा रामाः सरथाः सतूर्याः" इत्यादेरुत्तरमाह- **तवैवेति ॥** वाहा रथास्तवैव तिष्ठन्तु ॥ १.१.२६ ॥

**वरद.खं-** भो अन्तक यम एतत् ते पदार्था त्वया दित्सिताः श्वोऽभावा यतः श्वः अभावः नाशो येषां अनित्या इति यावत् । अत एते विषया नोपादेयाः । अपि वस्त्वसद्भावदशायां च सर्वेन्द्रियाणां तेजः सामर्थ्यं स्ववृद्ध्यक्षमार्थचिन्तया जरयन्ति । जीवितञ्च त्वया दत्तं सर्वमप्यल्पमेव । निरवधिकजीवितस्य मोक्षादन्यत्रासम्भवात् ॥ १.१.२६ ॥

**रा.खं-** एवं प्रलोभितो नचिकेताः शतायुष इत्यादेरुत्तरमाह- **श्व इत्यादिना ॥** हे अन्तक मृत्यो, मर्त्यस्य मनुष्यस्य यदेतत् य एते पुत्रादयः, व्यत्ययात्, तत् ते श्वः परेद्युः अभावाः भवन्तीति भावाः न भावाः अभावा असन्तः अस्थिरा इति यावत्, तद्रक्षणार्थायासेन सर्वेन्द्रियाणां तेजो वीर्यं जरयन्ति अपगमयन्ति च । अतः किं पुत्रपौत्रादिभिरिति भावः । यदपि स्वयं च जीवेत्याद्युक्तं तस्योत्तरमाह- **अपीति ॥** सर्वमपि जीवितमल्पमेव उत्तरावध्युपेतमेव । न हि मुक्ताविव उत्तरावधिशून्यमायुरस्तीति भावः । इमा रामा इत्यस्योत्तरम्- **तवैवेति ॥** वाहाः रथादिवाहनानि तवैव सन्तु । नृत्तगीतम्, द्वन्द्वैकवद्भावः, रामाभिः क्रियमाणं तवास्तु ॥ १.१.२६ ॥

उपनिषत्

**न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे**
**वित्तमद्राक्ष्म चेत् त्वाम् । जीविष्यामो**
**यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥**
**॥१.१.२७॥**

**व्यास-** ''वृणीष्व वित्तम्'' इत्यस्योत्तरमाह- **न वित्तेनेति ॥** देवे दृष्टे पृथग्वित्तायुःप्रार्थनं न कार्यमेव, तयोरनुषङ्गसिद्धत्वादित्याह- **लप्स्यामह इति ॥** आयुषः स्वयं ईश्वरत्वाच्च न तत्पृथग्वरणीयमित्याह- **जीविष्याम इति ॥** ॥१.१.२७॥

**वामन-** न च मरणादिक्लेशमनुभवन् मनुष्यः तत्परिहारं विना वित्तेन तर्पणीयः । अथापि वयं यावद्रम्यं वित्तं तु विनाऽपि वरं त्वद्दृष्ट्यैव लप्स्यामहे । यावत् त्वमीशिष्यसि तावत् जीविष्यामः । मम वरणीयो वरस्तु सर्वजीवसंस्थः स भगवानेव । सम्पूर्णफलत्वात् ॥ १.१.२७ ॥

**वे.खं-** ''वृणीष्व वित्तम्'' इत्यस्योत्तरमाह- **न वित्तेनेति ॥** महावित्तलाभेऽपि मनुष्यस्य तृप्त्यदर्शनादित्यर्थः । किञ्च त्वद्विधेभ्यो वित्तादिप्रार्थनञ्च न कार्यम् । तस्य नान्तरीयकतया सिद्धत्वादित्याह- **लप्स्यामह इति ॥** चेत् यदि त्वामद्राक्ष्म तर्हि वित्तं लप्स्यामहे प्राप्स्यामह एव । त्वद्दर्शनमात्रेण वित्तलाभो भविष्यतीति न पृथक्प्रार्थनीयमिति भावः । जीवनमपि न पृथक्प्रार्थनीयम् । तस्य त्वदधीनत्वादित्याह- **जीविष्याम इति ॥** त्वं यावदीशिष्यसि रक्षयिष्यसि तावज्जीविष्यामोऽतो नायं वरो वरणीयः । किन्तु मे मया वरणीयस्तु वरः स एव यः प्राक् प्रार्थित इत्यर्थः ॥१.१.२७॥

**वरद.खं-** इतोऽपि न वित्तदानेन तोषणीयो मनुष्य इत्याह- **न वित्तेनेति ॥** महति वित्ते दत्तेऽपि मनुष्यस्य परितोषादर्शनादित्यर्थः । इतोऽपि त्वद्विधेभ्यो देवेभ्यो वित्तादिप्रार्थनं न कर्तव्यम् । नान्तरीयकतया लाभादित्याह- **लप्स्यामह इति ॥** त्वामद्राक्ष्म चेत् त्वद्दर्शनसामर्थ्यादेव वित्तं लप्स्यामहे । न पुनस्तदर्थं पृथक्प्रयत्नः कर्तव्य इत्यर्थः । जीवनार्थमपि न पृथक्प्रार्थनं कर्तव्यं त्वत्सन्निधिमात्रेणैव तस्य सिद्धेरित्याह- **जीविष्याम इति ॥** त्वं यावन्तं कालमीशिष्यसे समर्थो वर्तसे तावन्तं कालं वयमपि त्वदनुग्रहेण जीविष्यामः । अतस्तदस्माभिः पृथङ्न प्रार्थनीयमित्यर्थः ॥ १.१.२७ ॥

**रा.खं-** ''वृणीष्व वित्तम्'' इत्यादेरुत्तरम्- **न वित्तेनेति ॥** वित्तेन मनुष्यः न तर्पणीयो नाप्यायनीयः । कुत इत्यतः त्वादृशे देवे दृष्टे वित्तायुषोरनुषङ्ग-सिद्धत्वान्न ते पृथक् प्रार्थनीये इत्याह- **लप्स्यामह इति ॥** त्वां चेदद्राक्ष्म दृष्टवन्तः स्मः तर्हि वित्तं लप्स्यामहे । त्वं यावदीशिष्यसि, ईश ऐश्वर्ये, मम यावदायुषः ईश्वरो भविष्यसि तावत्कालं जीविष्यामो वयम् । तव आयुषः कर्तृत्वादिति भावः । परस्मैपदं छान्दसम् । तर्हि कं कामं याचस इत्यत आह- **वरस्त्विति ॥** स एव प्राग् याचित एवेत्यर्थः । तुशब्दः अस्य वरस्य सर्वातिशयद्योतकः ॥ १.१.२७ ॥

उपनिषत्

**अजीर्यताममृतानामुपेत्य जीर्यन् मर्त्यः क्वाधस्थः प्रजानन् ।**
**अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥**
**॥१.१.२८॥**

**व्यास-** अजीर्यताममृतानां देवानां सकाशं एत्य मर्त्यो जीर्यन्क्वाधस्थः अपकृष्टश्च केति लप्स्यामह इत्यादि विवृण्वतोक्तम् । दीर्घजीवनस्य उक्तदुःखहेतुत्वाच्च नैतद्वरणीयमित्याह- **अभिध्यायन्निति** ॥ निवृत्तान् वर्णरतिप्रमोदान् ॥१.१.२८॥

**वामन-** इतश्च हरिरेव वरणीय एष्टव्य इत्याह– **अजीर्यतामिति** ॥ त्वादृशानां समीपमेत्य तत् सार्वज्ञ्यादिगुणजातं प्रकर्षेण जानन्नपि ततः साक्षादुत्तमतत्त्वश्रवणं विहाय स्वयमेव जीर्यन् मर्त्यः क्वधस्थो भवति । नित्यातिकथनतीक्ष्णे नरके पतित्वा नित्यं तत्रैव तिष्ठति । तथाच भगवतैवान्यत्रोक्तम्-

**यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत् परम् ।**
**असुराणां तमःप्राप्तिस्तदा नियमतो भवेत् ॥ इति ता.नि.१.९०**

अत्र क्वधस्थ इति क्वथस्थ उच्यते । "तृतीयोऽतिशये" इति थकारस्य धकारः । "अधा ते विष्णो विदुषा चिदर्घ्यः" (ऋ.सं.१.१५६.१) इत्यादिवत् । अतिदीर्घे जीविते को रमेत श्रेयस्काम इति शेषः ॥ १.१.२८ ॥

**वे.खं-** कुत एवं निर्बन्ध इति चेत् यतस्त्वादृशगुरुप्राप्तावपि भगवत्स्वरूप-मविज्ञाय पुत्रादिकं वृण्वतो मे तम एव भविष्यति । तथाहि श्रुतिः "इह चेदवेदीदथ सत्यमस्ति'(केन.२.५) इत्यादिका । तस्मादेवं जानता मया न तत्प्रार्थ्यत इति भावेनाह- **अजीर्यतामिति** ॥ प्रजानन् मर्त्यः अजीर्यतां जराशून्यानां अमृतानां मरणशून्यानां त्वद्विधानां देवानामुप समीपमेत्य

**वे.खं-** ''वृणीष्व वित्तम्'' इत्यस्योत्तरमाह- **न वित्तेनेति** ॥ महावित्तलाभेऽपि मनुष्यस्य तृप्त्यदर्शनादित्यर्थः । किञ्च त्वद्विधेभ्यो वित्तादिप्रार्थनञ्च न कार्यम् । तस्य नान्तरीयकतया सिद्धत्वादित्याह- **लप्स्यामह इति** ॥ चेत् यदि त्वामद्राक्ष्म तर्हि वित्तं लप्स्यामहे प्राप्स्यामह एव । त्वद्दर्शनमात्रेण वित्तलाभो भविष्यतीति न पृथक्प्रार्थनीयमिति भावः । जीवनमपि न पृथक्प्रार्थनीयम् । तस्य त्वदधीनत्वादित्याह- **जीविष्याम इति** ॥ त्वं यावदीशिष्यसि रक्षयिष्यसि तावज्जीविष्यामोऽतो नायं वरो वरणीयः । किन्तु मे मया वरणीयस्तु वरः स एव यः प्राक् प्रार्थित इत्यर्थः ॥१.१.२७॥

**वरद.खं-** इतोऽपि न वित्तदानेन तोषणीयो मनुष्य इत्याह- **न वित्तेनेति** ॥ महति वित्ते दत्तेऽपि मनुष्यस्य परितोषादर्शनादित्यर्थः । इतोऽपि त्वद्विधेभ्यो देवेभ्यो वित्तादिप्रार्थनं न कर्तव्यम् । नान्तरीयकतया लाभादित्याह- **लप्स्यामह इति** ॥ त्वामद्राक्ष्म चेत् त्वद्दर्शनसामर्थ्यादेव वित्तं लप्स्यामहे । न पुनस्तदर्थं पृथक्प्रयत्नः कर्तव्य इत्यर्थः । जीवनार्थमपि न पृथक्प्रार्थनं कर्तव्यं त्वत्सन्निधिमात्रेणैव तस्य सिद्धेरित्याह- **जीविष्याम इति** ॥ त्वं यावन्तं कालमीशिष्यसे समर्थो वर्तसे तावन्तं कालं वयमपि त्वदनुग्रहेण जीविष्यामः । अतस्तदस्माभिः पृथङ्न प्रार्थनीयमित्यर्थः ॥ १.१.२७ ॥

**रा.खं-** ''वृणीष्व वित्तम्'' इत्यादेरुत्तरम्- **न वित्तेनेति** ॥ वित्तेन मनुष्यः न तर्पणीयो नाप्यायनीयः । कुत इत्यतः त्वादृशे देवे दृष्टे वित्तायुषोरनुषङ्ग-सिद्धत्वान्न ते पृथक् प्रार्थनीये इत्याह- **लप्स्यामह इति** ॥ त्वां चेदद्राक्ष्म दृष्टवन्तः स्मः तर्हि वित्तं लप्स्यामहे । त्वं यावदीशिष्यसि, ईश ऐश्वर्ये, मम यावदायुषः ईश्वरो भविष्यसि तावत्कालं जीविष्यामो वयम् । तव आयुषः कर्तृत्वादिति भावः । परस्मैपदं छान्दसम् । तर्हि कं कामं याचस इत्यत आह- **वरस्त्विति** ॥ स एव प्राग् याचित एवेत्यर्थः । तुशब्दः अस्य वरस्य सर्वातिशयद्योतकः ॥ १.१.२७ ॥

उपनिषत्

**अजीर्यताममृतानामुपेत्य जीर्यन् मर्त्यः क्वाधस्थः प्रजानन् ।**
**अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥**
**॥१.१.२८॥**

**व्यास-** अजीर्यताममृतानां देवानां सकाशं एत्य मर्त्यो जीर्यन्क्वाधस्थः अपकृष्टश्च क्वेति लप्स्यामह इत्यादि विवृण्वतोक्तम् । दीर्घजीवनस्य उक्तदुःखहेतुत्वाच्च नैतद्वरणीयमित्याह- **अभिध्यायन्निति** ॥ निवृत्तान् वर्णरतिप्रमोदान् ॥१.१.२८॥

**वामन-** इतश्च हरिरेव वरणीय एष्टव्य इत्याह– **अजीर्यतामिति** ॥ त्वादृशानां समीपमेत्य तत् सार्वज्ञ्यादिगुणजातं प्रकर्षेण जानन्नपि ततः साक्षादुत्तमतत्त्वश्रवणं विहाय स्वयमेव जीर्यन् मर्त्यः क्वधस्थो भवति । नित्यातिक्वथनतीक्ष्णे नरके पतित्वा नित्यं तत्रैव तिष्ठति । तथाच भगवतैवान्यत्रोक्तम्-

**यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत् परम् ।**
**असुराणां तमःप्राप्तिस्तदा नियमतो भवेत् ॥ इति ता.नि.१.९०**

अत्र क्वधस्थ इति क्वथस्थ उच्यते । ''तृतीयोऽतिशये'' इति थकारस्य धकारः । ''अधा ते विष्णो विदुषा चिदर्ध्यः'' (ऋ.सं.१.१५६.१) इत्यादिवत् । अतिदीर्घे जीविते को रमेत श्रेयस्काम इति शेषः ॥ १.१.२८ ॥

**वे.खं-** कुत एवं निर्बन्ध इति चेत् यतस्त्वादृशगुरुप्राप्तावपि भगवत्स्वरूप-मविज्ञाय पुत्रादिकं वृण्वतो मे तम एव भविष्यति । तथाहि श्रुतिः ''इह चेदवेदीदथ सत्यमस्ति'(केन.२.५) इत्यादिका । तस्मादेवं जानता मया न तत्प्रार्थ्यत इति भावेनाह- **अजीर्यतामिति** ॥ प्रजानन् मर्त्यः अजीर्यतां जराशून्यानां अमृतानां मरणशून्यानां त्वद्विधानां देवानामुप समीपमेत्य

भगवदुपदेशमप्राप्यैव जीर्यन् विनश्यमानः क्व न क्वापीत्यर्थः । जीवस्य स्वरूपतो नाशाभावात् । देहवियोगस्य भगवज्ज्ञानिनोऽपि सत्त्वात् । जीर्यन्नित्युक्तं विवृणोति- **क्वाधस्थ इति** ॥ अन्धन्तमआद्यधोगतिस्थः क्व ? न क्वापीत्यर्थः । प्रजानन्निति यमस्य सम्बोधनं वा । दुःखहेतुत्वाच्च न दीर्घजीवनं वरणीयमित्याह- **अभिध्यायन्निति** ॥ वर्णेत्यतः पूर्वं स्त्रीपुत्रादीनामिति शेषः । वर्णः स्त्रीपुत्रादिरूपविशेषः, रतिः क्रीडा, प्रमोदः तदुत्थः सुखविशेषः वर्णरतिप्रमोदान् निवृत्तानिति शेषः । अतिदीर्घकालजीवने हि स्वजीवनमध्य एवान्येषां विनाशः स्यात् । तेषामतिदीर्धकालजीवननियमाभावात् । ततश्च तन्नाशे तेषां स्मरणेन तु दुःखं स्यात् । अतो न दीर्धजीवनं पुरुषार्थः । प्रत्युत अनर्थहेतुरिति भावः ॥ १.१.२८ ॥

**वरद.खं-** एतदेव विवृणोति- **अजीर्यतामिति** ॥ अजीर्यतां अजराणां अमृतानां मृतिरहितानां देवानां उप समीपं एत्य प्राप्य । जीर्यन् जीर्णो भवन्मर्त्यः क्वास्ति । एवं अधस्थः अधस्थश्च नरकाद्यधोदेशे स्थितश्च मर्त्यः क्वास्ति न कुत्राप्यस्तीत्यर्थः । प्रजानन् इति यमस्य सम्बोधनम् । बहुकालजीवनरूपो यो वरो दित्सितस्त्वया सोऽनर्थहेतुश्चेत्याह- **अभिध्यायन्निति** ॥ अत्र वर्णशब्देन सौकुमार्यादिरूपविशेष उच्यते । रतिस्तु क्रीडा, प्रमोदः तदुत्थसुखविशेषः । अतिदीर्घकालजीवने हि स्वजीवनमध्ये एवान्यपदार्थानां विनाशः स्यात् । तेषामतिदीर्घकालजीवनाभावात् । ततश्च तन्नाशानन्तरं तेषां स्मरणेन दुःखं स्यात् । अतोऽतिदीर्घजीवनमपि न पुरुषार्थः ॥ १.१.२८ ॥

**रा.खं-** लप्स्यामह इत्यादिनोक्तमेव विवृणोति- **अजीर्यतामिति** ॥ हे प्रजानन् विद्वन्, अजीर्यताम्, "जॄष् वयोहानौ" उपलक्षणम्, वयःप्रभृति-सम्पत्तिमताममृतानां देवानाम्, सकाशमिति शेषः, उपेत्य प्राप्य जीर्यन् मर्त्यः क्व अधस्थोऽप्रकृष्टश्च क्व कुत्र ? न कुत्रापि । किन्तु महानेव अजीर्यन्नेवाऽस्त

इत्यर्थः । दीर्घजीवनस्य दुःखहेतुत्वाच्च न तत् प्रार्थ्यमित्याह- **अभिध्यायन्निति ॥** वर्णरतिप्रमोदान् वर्णः ब्राह्मणादिः, देहगतशोभाविशेषो वा, रतिः विषयानुभवजं सुखं प्रमोदः प्रकृष्टविषयानुभवजं सुखम्, एतान् पूर्वानुभूतान् विषयान् इदानीं निवृत्तान् अभिध्यायन् स्मरन् अतिदीर्घे जीविते को रमेत न कोऽपीत्यर्थः । वयोऽधिकत्वे जराद्यापत्त्या भोगशक्तेरभावात् । प्रत्युत क्लेश एव भवेदिति भावः ॥ १.१.२८ ॥

**उपनिषत्**

**यस्मिन्निदं विचिकित्सन्ति मृत्यो साम्पराये**
**महति ब्रूहि नस्तत् । योऽयं वरो गूढमनुप्रविष्टो**
**नान्यं तस्मान्नचिकेता वृणीते ॥१.१.२९॥**

**॥ इति काठकोपनिषदि प्रथमाध्यायस्य प्रथमा वल्ली ॥**

**भाष्यम्**

**महति साम्पराये मुक्तौ ॥ २९ ॥**

**॥ इति काठकभाष्ये प्रथमाध्यायस्य प्रथमा वल्ली ॥**

**व्यास-** इदं प्रेते मनुष्ये प्रेरकः अस्तीति नास्तीत्युक्तप्रकारेण यस्मिन् विचिकित्सन्ति सन्दिग्धा भवन्ति । वरो वरविषयः गूढं गूढत्वम् । मरणस्याप्रकृतत्वात् मरणं मानुप्राक्षीरित्युक्तिः कथमित्यतस्तद्घटयन्नाह- **मरण इति ॥** अप्रतीतेः साम्परायशब्दार्थमाह- **साम्पराय इति ॥** साम्परायशब्दस्य श्रेयोवाचित्वात् कथं मुक्त्यर्थो व्याख्यात इत्यत उक्तम्- **महतीति ॥** महत्त्वविशेषणान्मुक्त्यर्थो व्याख्यात इत्यर्थः ॥ १.१.२९ ॥

**वामन-** अतः श्रेयस्कामाय मह्यं तदुपासनमेव ब्रूहीति प्रार्थयन्नाह – **यस्मिन्निति ॥** यस्मिन् विष्णवाख्ये ब्रह्मणि इदं जीवनियामकत्वादिधर्मजातं महति साम्पराये मुक्त्यवस्थायां विद्यमाना देवादयो ह्यपि विचिकित्सन्ति तत् ब्रह्मैवास्माकं ब्रूहीति । योऽयं मया वरणीयत्वेन प्रार्थितो विष्णवाख्यो विशिष्टवरः तस्मादन्यं नाहं वृणे । स हि सर्वजीवहृदये गूढत्वेनानुप्रविष्टत्वात् सुदुर्ज्ञेयः । अतस्तमेव वृणे ॥१.१.२९॥

**वे.भा-** "यस्मिन्निदं विचिकित्सन्ति मृत्यो साम्पराये महति ब्रूहि नस्तत्" इत्युत्तरवाक्ये "यस्मिन्महति साम्पराये इदं ब्रह्मास्ति नवेति विचिकित्सन्ति तद्ब्रूहीति प्रार्थनादिति भावेन महति साम्पराय इत्यस्यार्थमाह- **महतीति ॥** साम्परायशब्दस्य श्रेयोमात्रवाचकत्वेऽपि महच्छब्दसमानाधिकृतस्य मुक्तिवाचकत्वोपपत्तेरित्यर्थः ॥ १.१.२९ ॥

**वे.खं-** पूर्वोक्तमेव निर्धारयति- **यस्मिन्निति ॥** हे मृत्यो महति साम्पराये मुक्तौ नियामकतयेदं ब्रह्मास्ति नवेति यस्मिन् विचिकित्सन्ति तत् मुक्तनियामकभगवत्स्वरूपमेव नो ब्रूहीति योजना । श्रुतिः स्वयमाह- **य इति ॥** योऽयं वरो गूढं गूढत्वमनुप्रविष्टः प्राप्तस्तमेव नचिकेता वृणीते न तस्मादन्यमित्यर्थः ॥ १.१.२९ ॥

**वरद-** "यस्मिन्निदं विचिकित्सन्ति मृत्यो साम्पराये महति ब्रूहि नस्तत्" इत्यत्र महासाम्परायशब्दार्थमाह- **महतीति ॥** १.१.२९ ॥

**वरद.खं- गूढमनुप्रविष्ट इति ॥** गूढत्वमनुप्रविष्ट इत्यर्थः ॥ १.१.२९ ॥

**रा.खं-** तर्हि किमाकूतं तवेत्यत आह- **यस्मिन्निति ॥** यस्मिन् विषये इदं इत्थं प्रेतप्रेरकतया अस्ति न वेति विचिकित्सन्ति सन्दिहते जनाः, तत् तु तदेव प्रेतप्रेरकस्वरूपम्, हे मृत्यो महति साम्पराये मुक्तौ, निमित्तसप्तमी, मोक्षार्थं नोऽस्मभ्यं ब्रूहि उपदिश । साम्परायपदस्य श्रेयोमात्रसाधारण्यात्

मुक्त्यर्थत्वलाभाय महतीत्युक्तम् । योऽयं वरः प्रेतप्रेरकस्वरूपोक्तिप्रार्थनरूपः गूढं गूढत्वं गोप्यतामनुप्रविष्टः प्राप्तः तस्मात् वरादन्यं वरं नचिकेता न वृणीत इति स्वात्मानमेव नामनिर्देशेनाह ॥ १.१.२९ ॥

**॥ इति प्रथमाध्याय स्य प्रथमा वल्ली ॥**

## ॥ अथ प्रथमाध्यायस्य द्वितीया वल्ली ॥

**अन्यच्छ्रेयोऽन्यदुतेव प्रेयस्ते उभे नानार्थे**
**पुरुषं सिनीतः । तयोः श्रेय आददानस्य साधु**
**भवति हीयतेऽर्थाद् य उ प्रेयो वृणीते ॥१.२.१॥**

**व्यास-** दीयमानमपि पुत्रादिकं प्रेयोऽपरनामानं परित्यज्य श्रेयोऽपरनाम्नीं ब्रह्मविद्यां अभ्यर्थयमानं प्रशंसितुं श्रेयसः प्रेयसः सकाशात्को विशेषः येन तदभ्यर्थयमानः प्रशस्यत इत्यतः श्रेयसो मोचकत्वात्प्रेयसो बन्धकत्वादित्याह- **अन्यदित्यादिना** ॥ इवशब्देन जानतां श्रेयःप्रेयसोरेकत्वं सूचयति । अन्यत्वमेव दर्शयति- **ते उभे नानार्थे भिन्नप्रयोजन इति** ॥ सिनीतः बध्नीतः । ''षिञ् बन्धने'' इति धातोः । प्रेय एव बन्धकत्वेन निरूपितम्- **अर्थादिति** ॥१.२.१॥

**वामन-** अथ यमो नचिकेतसो निष्ठातिशयं दृष्ट्वाऽत्यन्तं सन्तुष्टस्तमभीष्ट-वरदानयोग्यं मन्वानस्तमेवाधिकं प्रशंसति– **अन्यच्छ्रेय इत्यादिवाक्यैः ॥** श्रेयश्च प्रेयश्चेत्युक्ते अत्यन्तान्योन्यविरुद्धलक्षणे विरुद्धार्थप्रदे च । तस्मादेते पुरुषं योग्यायोग्यप्रवृत्त्योरेव सिनीतः बध्नीतः । ''षिञ् बन्धने'' इति धातोः । यस्तयोर्मध्ये योग्यप्रवृत्तिकं श्रेय आदत्ते तस्य साधु भवति प्रशस्तं मोक्षफलं भवति । अन्यस्तु साधुप्रयोजनेन हीयते ॥ १.२.१ ॥

**वादि-** ''अन्यदुतेव प्रेयः'' इत्यत्र प्रेय उत प्रेयश्च अतिशयेन प्रीतिविषयं धनवनितादिकं वस्तु अन्यदेवेति सम्बन्धः । इवेति वदता वस्तुगत्या

वैराग्यवतां ज्ञानिनां ब्रह्मादीनां धनादिकमपि विष्णुप्रीतिकरयजनाद्युपयोगीति श्रेयस्येवान्तर्भावात्तस्य न पार्थक्यमिति सूचयति । अत एव ते उभे नानार्थे भिन्नप्रयोजने । उक्तरीत्या प्रेयसोऽपि श्रेयस्येवान्तर्भाव इत्यजानन्तं प्रेयसा उदरभरणाद्यैहिकफलमेव साधनीयमिति निश्चयवन्तं च पुरुषं सिनीतः बध्नीतः । यत एवं प्रेयसि पृथगादरवान् श्रेयस्साधनाध्ययनाध्यापनादिसत्कर्मापि भृतकाध्ययनादिना स्वोदरपूरणायैवोपयुङ्क्ते, किं बहुना, साक्षान्मोक्षोपयोगि देवालयगृहिगेहादौ क्रियमाणं विष्णुपूजनमपि स्वोदरभरणार्थमेवोपकरोति, तस्मात् ''असतीसङ्गदोषेण सति च मतिविभ्रमः'' इतिवदुभयोरपि बन्धकत्वमिति भावः ॥ १.२.१ ॥

**वे.खं-** दीयमानमपि पुत्रादिकं परित्यज्य ब्रह्मविद्यामर्थयमानं नचिकेतसं स्तोतुं तदुभयस्वरूपमाह- **अन्यदिति ॥** अत्र श्रेय इति ब्रह्मविद्योच्यते । निःश्रेयससाधनत्वात् । प्रेय इति प्रीतिविषयपुत्रादिकाम्यमुच्यते । उतशब्दश्चशब्दार्थः । इवशब्दोऽवधारणार्थः । श्रेयोऽन्यद्विलक्षणमेव प्रेयस इति शेषः । प्रेयश्च श्रेयसोऽन्यदेव । जानतां श्रेयःप्रेयसोरेकत्वं सूचयितुं वा इवशब्दः । कथं श्रेयःप्रेयसोः परस्परवैलक्षण्यमित्यत आह- **ते उभे इति ॥** ते उभे श्रेयःप्रेयसी नानार्थे मोक्षतदितराख्यविलक्षणप्रयोजनविषये पुरुषं जीवं सिनीतः बध्नीतः । ''षिञ् बन्धने'' इति धातोः । किं तत इत्यतस्तदुभय-माददानस्य फलमाह- **तयोरिति ॥** तयोः श्रेयःप्रेयसोर्मध्ये यः पुरुषः श्रेय एवादत्ते तस्य साधु भद्रं मोक्षाख्यं भवतीत्यर्थः । य उ यश्च प्रेय एव वृणीते स अर्थात् मोक्षाख्यप्रयोजनात् हीयते हीनो भवति ॥ १.२.१ ॥

**वरद.खं-** एवं नचिकेतसो विषयाभिलाषाराहित्यादयं ब्रह्मविद्यायोग्य इति भावेन विषयकामनायुक्तस्य तद्रहितस्य च फलं निरूपयति यमः- **अन्यदिति ॥** श्रेयः प्रेयसः सकाशात् अन्यत् विलक्षणम् । एवं प्रेयश्च श्रेयसः अन्यत् विलक्षणम् । कथं श्रेयःप्रेयसोः परस्परं वैलक्षण्यमित्यत उच्यते- **ते उभे इति ॥**

श्रेयःप्रेयसी नानार्थे भिन्नप्रयोजने । पुरुषं जीवं सिनीतः बध्नीतः आश्रित्य वर्तत इति यावत् । तयोः श्रेयसः प्रेयसः मध्ये यः पुरुषः श्रेय एवादत्ते नतु प्रेयस्तस्य पुरुषस्य साधु भवति भद्रं भवति । य उपासकः पुरुषः प्रेयः प्रियसाधनविषयादिकमेव वृणीते सोऽर्थात् मोक्षादिप्रयोजनात् हीनो भवति

**रा.खं-** दीयमानमपि पुत्रादिकामं हित्वा ब्रह्मविद्यां याचमानः त्वं प्रशस्तोऽसीति तं "स त्वं प्रियान्" इत्यादिना प्रशंसितुं ब्रह्मविद्याया मोचकत्वम्, पुत्रादिकामस्य बन्धकत्वम्, तद्भाजोः स्तुतिनिन्दे, ज्ञाज्ञयोः स्थिती च सार्धमन्त्रद्वयेनाऽह यमः- **अन्यदित्यादिना** ॥ श्रेयः प्रशस्ततमं ब्रह्मज्ञानम् । अन्यत्, प्रेयः उत प्रियतमं दारापत्यादि काम्यमानं वस्त्वपि अन्यदिव, इति च जानतां दारापत्यादिरूपप्रेयसोऽपि सद्धर्मद्वारा श्रेयस्त्वमेवेति सूचनाय इवशब्दः । द्वयोरन्योन्यत्वं नाम किमित्यतः ऐहिकामुष्मिक-सुखहेतुत्वं तदित्याह- **ते उभे इति** ॥ ते उभे नानार्थे भिन्नप्रयोजनके पुरुषं देहिनं सिनीतः बध्नीतः, "षिञ् बन्धने" इति धातोः । पुरुषस्य द्वे प्रसक्ते इत्यर्थः । ततः किमित्यत आह- **तयोरिति** ॥ श्रेयःप्रेयसोर्मध्ये श्रेयः ब्रह्मविद्यां आददानस्य उपासीनस्य साधु भद्रं भवमोचनं भवति । य उ य=एव प्रेयः दारापत्यादिकामं वृणीते सोऽर्थात् परमपुरुषार्थात् हीयते हीनो भवति । भवपाश एव बद्धो भवतीत्यर्थः ॥ १.२.१ ॥

उपनिषत्

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य**
**विविनक्ति धीरः । श्रेयो धीरोऽभि प्रेयसो वृणीते**
**प्रेयो मन्दो योगक्षेमान् वृणीते ॥ १.२.२ ॥**

**व्यास-** तयोरित्युक्तप्रकारेण श्रेयसः साधुहेतुत्वात् प्रेयसो बन्धकत्वात् धीरो विवेकतः श्रेयो वृणीयादित्याह- **श्रेयश्चेति** ॥ मनुष्यं आ इतः एतः

मनुष्यं बन्धकत्वेन प्राप्य तिष्ठतः । धीरस्तौ सम्परीत्य ज्ञात्वा विविनक्ति विवेचयति । विवेकं कृत्वा धीरः प्रेयसः प्रेयोऽभितोऽवज्ञाय श्रेयो वृणीते । प्रेय एव दर्शयितुमुक्तम्- **योगक्षेमान्कुशलानिति** ॥१.२.२॥

**वामन-** नन्वप्राप्तयोः कथमादानं हानं वा शक्यमित्यत आह– **श्रेयश्चेति** ॥ श्रेयःप्रेयसी, किं मे कृत्यमिति मनसा मन्वानं मनुष्यं युगपत् समेतः । तथाहि इदं मयाऽनुष्ठेयमदो वेति संशयकोटित्वेन सम्प्राप्नुतः । अथ धीरस्तावत् स्वबुद्ध्या सम्यक् सर्वतो विचार्य विविनक्ति अयं हेयोऽसौ ग्राह्य इति विवेचयति । अथ मुखतः प्राप्तस्यापि प्रेयसः सकाशात् विहाय श्रेय एव हि स धीरोऽभीष्टं वृणीते । प्रेयस इति द्वितीयार्थवाचिनी पञ्चमी वा विभक्तिः । तदा तु प्रेयसः श्रेयो वृणीत इत्यन्वयः । प्रेयो विहाय श्रेयो वृणीत इत्यर्थः । ''कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या'' इति सूत्रात् । अथ मन्दबुद्धिः श्रेयो विहाय प्रेयो वृणीते । ऐहिकयोगक्षेमांश्च । अविमृश्य स्वाभीष्टकारित्वात् ॥ १.२.२ ॥

**वादि-** ''मनुष्यमेतः'' इत्यत्र ''आ इत्युपसर्गपूर्वकात् ''इण् गतौ'' इति धातोः इत इति द्विवचने वक्तव्ये ''आद्गुणः'' (सि.कौ.६९) इति गुणे कृते एत इति रूपनिष्पत्तिरिति ज्ञेयम् ॥ १.२.२ ॥

**वे.खं-** तदेव विशदमाह- **श्रेयश्चेति** ॥ श्रेयश्च प्रेयश्चेत्येतौ कर्मवशान्मनुष्यमेतः प्राप्नुतः । तदा धीरः पुरुषस्तौ प्राप्तौ श्रेयःप्रेयोरूपार्थौ सम्परीत्य सम्यक् ज्ञात्वा विविनक्ति इदं पुरुषार्थप्रदमिदं नेति विवेचयति । एवं विवेकानन्तरं धीरः प्रेयसः प्रेयः परित्यज्य श्रेय एव वृणीते । मन्दस्तु योगक्षेमान् अप्राप्तलाभो योगः, प्राप्तपरिपालनं क्षेमः । योगक्षेमात्मकं प्रेय एव वृणीते ॥ १.२.२ ॥

**वरद.खं-** एतच्छ्लोकार्थमेव विवृणोति- **श्रेयश्च प्रेयश्चेति** ॥ श्रेयःप्रेयसी मनुष्यं पुरुषं एतः आ समन्तात् इतः प्राप्नुतः । धीरस्तु पुरुषः तौ सम्परीत्य ते

श्रेयःप्रेयसी सं सम्यक् परीत्य परित इत्य ज्ञात्वेति यावत् । विविनक्ति विवेचयति । इदं पुरुषार्थस्य साधनं इदं नेति विवेचनानन्तरञ्च धीरः पुरुषः प्रेयसः श्रेय एवाभिवृणुते । प्रेयस इति ल्यब्लोपनिमित्ता पञ्चमी । प्रेयः परित्यज्य श्रेय एवाभिवृणीते इत्यर्थः । प्रेयःस्वरूपं निरूपयन्नेव अधीरपुरुषस्तु नैवमित्याह- **प्रेय इति** ॥ मन्दः अल्पः पुरुषः योगक्षेमलक्षणं प्रेय एव वृणीते नान्यदित्यर्थः ॥ १.२.२ ॥

**रा.खं-** उक्तानुवादपूर्वकं ज्ञानिनः स्थितिमाह- **श्रेयश्चेति** ॥ एत इत्यत्र आ इत इति पदच्छेदः । आङ्पूर्वस्य "इण् गतौ" इत्यस्य रूपम् । प्रागुक्तरूपं श्रेयश्च प्रेयश्च द्वे मनुष्यं एतः प्राप्य तिष्ठतः । धीरो ज्ञानी तौ श्रेयःप्रेयःशब्दितौ ब्रह्मविद्याकामौ सम्परीत्य सम्यक् ज्ञात्वा विवेकी प्रेयसः प्रियतमान् दारापत्यादिकामान् अभि- निपातानामनेकार्थत्वादवज्ञायेत्यर्थः, श्रेयो ब्रह्मविद्यां वृणीते । मन्दो विवेकहीनः, योगक्षेमान्, अप्राप्तकाम-प्राप्तिर्योगः, तस्यानपगमेन स्थिरत्वं क्षेमः, तद्रूपान् प्रेयसो वृणीते ॥१.२.२॥

### उपनिषत्

**स त्वं प्रियान् प्रियरूपांश्च कामान् अभिध्यायन्**
**नचिकेतो[१]ऽत्यस्राक्षीः । नैतां शृङ्कां वित्तमयीमवाप्तो**
**यस्यां मज्जन्ति बहवो मनुष्याः ॥ १.२.३ ॥**

### भाष्यम्

**शृङ्कां शृङ्खलाम् ॥ १.२.३ ॥**

**व्यास-** यत्प्रशंसार्थं श्रेयःप्रेयसोः स्वरूपं निरूपितं तमिदानीं प्रशंसति- **स त्वमिति** ॥ मया प्रलोभितोऽपि त्वं कामानां दोषानभिध्यायन् वित्तमयीं सुवर्णमयीम् । तस्या रम्यत्वाभावान्नावाप्त इत्यत उक्तम्- **यस्यामिति** ॥

---

१. "अन्यत् प्राक्षीः" इति श्रीराघवेन्द्रस्वामिपाठः ।

**व्या.भा-** शृङ्काशब्दार्थमाह- **शृङ्कामिति ॥** कण्ठभूषामिति यावत् ॥

**वामन-** स त्वं बालः सन्नप्यमन्दबुद्धित्वात् पुत्रमित्रादिप्रियार्थान् नृत्तगीतादिप्रियरूपकामांश्च श्वोभावादिदोषमभिध्यायन् अत्यस्राक्षीः । ''सृङ्काम्'' इति पदमनूद्य ''शृङ्खलाम्'' इति व्याख्याति । त्वमेतां मद्दत्तामपि शृङ्खलां न गृहीतवानसि । श्रेयोवरणैकतत्परत्वात् । वित्तमोहराहित्याच्च ॥

**वे.भा-** एवं नचिकेतसो विषयाभिलाषाराहित्यादयं ब्रह्मविद्यायोग्य इति भावेन विषयकामनायुक्तस्य तद्रहितस्य च स्वरूपं निरूपयति- **अन्यदित्यादिना ॥** अत्र ''नैतां शृङ्कां वित्तमयीमवाप्तः'' इत्यत्राप्रतीतेः शृङ्काशब्दार्थमाह- **शृङ्कामिति ॥** यद्यपि ''शृङ्कां चेमामनेकरूपां गृहाण'' इत्यत्र शृङ्काशब्दः कण्ठमालापरतया व्याख्यातः । तथाप्यनुवादसन्तुष्टयमदत्तकण्ठमालाया नचिकेतसा प्राप्तत्वात् तृतीयवरत्वेन कण्ठमालाया यमेनादत्तत्वान्नचिकेतसा मास्त्वित्यनुक्तत्वाच्च ''नैतां शृङ्कां वित्तमयीमवाप्तः'' इत्युक्त्ययोगात् ''यस्यां मज्जन्ति'' इत्युक्तसर्वमनुष्यबन्धकत्वायोगाच्चात्र शृङ्खलापरत्वेन व्याख्यात इत्यवधेयम् ॥१.२.३॥

**वे.खं-** यत्प्रशंसार्थमेतदुक्तं तमिदानीं प्रशंसति- **स इति ॥** हे नचिकेतः स मया प्रलोभितोऽपि त्वं प्रियान् तत्र हेतुः प्रियरूपान् मनोहररूपान् कामान् काम्यान् मया दत्तानपि अभिध्यायन् तेषामनित्यत्वादिदोषानिति शेषः । अत्यस्राक्षीः अतिसृष्टवानसि । एतां मया दत्तां वित्तमयीं सुवर्णमयीं शृङ्खलां नैवावाप्तः । यद्यन्येऽपि नैवाप्ताः तर्हि को विशेषोऽस्येत्यत आह- **यस्यामिति ॥** यस्यां वित्तमय्यां शृङ्खलायां बहवो मनुष्या मज्जन्ति तया शृङ्खलया आत्मानं बध्नन्तीत्यर्थः ॥ १.२.३ ॥

**वरद-** ''शृङ्कां चेमाम्'' इत्यत्र शृङ्काशब्दस्याप्रतीयमानार्थत्वादर्थमाह- **शृङ्कामिति ॥** १.२.३ ॥

**रा.खं-** यत्प्रशंसार्थं उपोद्घात उक्तस्तामाह- **स त्वमिति ॥** हे नचिकेतः, स त्वं मया प्रलोभितोऽपि त्वं प्रियान् दारापत्यादीन् प्रियरूपांश्च गृहारामक्षेत्रादींश्च कामान् काम्यमानान् अभिध्यायन् अस्थिरतया मन्वानः अन्यत् ब्रह्मस्वरूपं प्राक्षीः अप्राक्षीः, अडभावः छान्दसः, पृष्टवानसि । अत्यस्राक्षीरिति पाठे त्यक्तवानभूरित्यर्थः । वित्तमयीं सुवर्णमयीमेतां कण्ठधारणयोग्यां शृङ्कां शृङ्खलां नावाप्तः न स्वीकृतवान् । शृङ्केयमति-श्लाध्येत्याह । यस्यां मज्जन्ति आसक्ताः भवन्ति बहवो मनुष्याः, तादृशीमपि मया दीयमानां न गृहीतवान् । अतस्त्वं प्रशस्त इति भावः ॥ १.२.३ ॥

**उपनिषत्**

**दूरमेते विपरीते विषूची अविद्या या च**
**विद्येति ज्ञाता । विद्याभीप्सितं नचिकेतसं मन्ये**
**न त्वा कामा बहवो [१]लोलुपन्तः ॥ १.२.४ ॥**

**व्यास-** "योगक्षेमान्" इति "स त्वं प्रियान्" इति च प्रेयसः स्वरूपं निरूपितम् । साम्प्रतं उभयस्वरूपं स्पष्टं निरूपयति- **दूरमिति ॥** विपरीते विरुद्धे इत्युक्तं विरुद्धत्वमेव विवरीतुमुक्तम्- **विषूची विरुद्धगतिहेतू इति ॥** लोलुपन्तो लोलुपयन्तः प्रलोभयन्तीति यावत् ॥१.२.४॥

**वामन-** अतः श्रेयःप्रेयःसाधकयोः पुंसोरन्योन्यविरुद्धगतिमत्त्वं ह्युक्तम् । अथ तत्साधनभूतयोर्विद्याविद्ययोश्चात्यन्तं विरुद्धगतित्वं वक्ति– **दूरमिति ॥** येयं जीवेऽनादितस्तत्त्वाविद्या या च तद्विद्याऽत्यर्थं प्रयत्नसाध्येति ज्ञाता ते दूरत एव विपरीतत्वेन विष्वग्गते । तमःप्रकाशवत् सहस्थितिरहिते इत्यभिप्रायः । अतो विद्याभीप्सितं नचिकेतसं त्वां ऐहिकाः कामाः सुबहवोऽपि नालोलुपन्त नैवाचालयन्नित्यर्थः ॥ १.२.४ ॥

---

१. "अलोलुपन्त" इति वामनपण्डिताचार्यपाठः ।

**वे.खं-** श्रेयःप्रेयसोः स्वरूपं निरूपयन् ''ते उभे नानार्थे'' इत्युक्तमेव विवृणोति- **दूरमेत इति ॥** या प्रेयोरूपा अविद्या विद्याविरुद्धेति विज्ञाता । या च श्रेयोरूपा विद्येति ज्ञाता विद्वद्भिः त एते श्रेयःप्रेयसी । दूरं विपरीते अतिविरुद्धे । विरुद्धत्वमेव विवृणोति- **विषूची इति ॥** विरुद्धगतिहेतू इत्यर्थः । तत्राहं नचिकेतसं विद्याभीप्सितमेव मन्ये । कुतः । त्वा त्वां बहवः कामा न लोलुपन्तः न लोलुपन्ति । न प्रलोभयन्तीति यावत् ॥ १.२.४ ॥

**वरद.खं-** इदानीं श्रेयसः स्वरूपं निरूपयन्नेव नानार्थे इत्युक्तमेव विवृणोति- **दूरमिति ॥** एते श्रेयःप्रेयसी दूरं विपरीते अतिविरुद्धे कथं विषूची विरुद्धगती । या अविद्या सा प्रेय इत्युच्यते या च विद्येति विद्वद्भिः ज्ञाता सा श्रेय इत्युच्यत इत्यर्थः ॥ १.२.४ ॥

**रा.खं-** पूर्वं ''योगक्षेमान्'' इति ''प्रियान् प्रियरूपांश्च'' इति प्रेयस्स्वरूपं किञ्चित् स्पष्टीकृतम् । श्रेयस्स्वरूपं तु न स्पष्टम् । ''श्रेय आददानस्य'' इति सामान्यत उक्तेः । अतस्तदुभयं स्पष्टयन् नचिकेतसं स्तौति- **दूरमिति ॥** या अविद्या विद्याभिन्ना ऐहिकसुखसाधनत्वेन ज्ञाता या च विद्येति ज्ञाता, एते दूरं अन्योन्यं विदूरतो वर्तमाने । तदेवाह- **विपरीत इति ॥** परस्परं विरुद्धे, तद्व्यनक्ति विषूची विषूचीने विरुद्धफलहेतू । नचिकेतसं त्वा त्वां विद्याभीप्सितं विद्याभिकाङ्क्षिणं मन्ये जानामि । बहवः कामाः त्वा त्वां लोलुपन्तः लोलुपयन्तः अपेक्षां जनयन्तः न वर्तन्त इत्यर्थः । कामैः प्रलुब्धस्त्वं न भवसीति यावत् ॥ १.२.४ ॥

### उपनिषत्

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।**
**दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥**
॥१.२.५॥

विलक्षणमिति यावत् । कृताकृतादित्यस्य विवरणं वा भूताच्चेत्यादि । तत् लोकविलक्षणतया प्रसिद्धं यत् यद्वस्तु पश्यसि जानासि तद्वद मह्यमित्यर्थः ॥ ॥१.२.१४ ॥

उपनिषत्

**सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि**
**च यद् वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत् ते पदं सङ्ग्रहेण ब्रवीमि ॥ ओमित्येतत् ॥**
**॥१.२.१५ ॥**

**व्यास-** पृष्टं ब्रह्मस्वरूपं निरूपयितुं प्रतिजानीते- **सर्व इति** ॥ सर्वाणि तपांसि च यत्प्रतिवदन्ति ॥१.२.१५॥

**वामन-** ''सर्वे वेदाः'' इत्यादिना तत्स्वरूपलक्षणमेव तस्मै स वक्ति । पदं स्वरूपम् । तपांसि युक्तयः । ओमितिनामकं एतत् ॥१.२.१५॥

**वादि-** ''सर्वे वेदा यत्पदमामनन्ति'' इति वदता वेदे अग्निवैश्वानर-हिरण्यगर्भरुद्रेन्द्रविश्वकर्मादीनां बहुधा निरूपणात् कथमेकस्य सर्वोत्तमत्वमिति शङ्का परिहृता । अग्न्यादिशब्दैरपि वेदा विष्णुमेव वदन्तीति भावः । अन्यथा सृष्ट्युत्तरकालीनानेतान् सृष्टेः प्रागपि विद्यमाना वेदाः कथं ब्रूयुः? तर्ह्यग्न्यादिदेवानां यज्ञादिकर्मणां चाप्रामाणिकत्वप्रसङ्ग इति शङ्कानिवारणायोक्तं आ सम्यक् मनन्ति वदन्तीति । सृष्ट्युत्तरकालमग्न्यादिस्वनामानि स्वनामधारकेषु तेषु दत्त्वा अमुख्यया वृत्त्या तानपि वेदैर्वाचयतीति ज्ञेयम् । तदुक्तं श्रुतिगीतायां ''क्वचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगमः'' (भाग.१०.९४.१५) इति ॥ ब्रह्मचर्यं ब्रह्मणो वेदस्य चर्यं श्रवणमननादि-रूपमाचरणं चरन्तीत्यर्थः । ब्रह्मस्वरूपस्यालं वक्तुमशक्यत्वात्सङ्ग्रहेणेत्युक्तम् ॥ ॥ १.२.१५ ॥

**वे.खं-** एवं प्रार्थितो यमो बुद्ध्यारोहार्थं सङ्ग्रहेण भगवत्स्वरूपवचनं प्रतिजानीते- **सर्व इति ॥** सङ्ग्रहेण कथनस्यानुपादेयताशङ्कापरिहाराय "सर्वे वेदाः" इत्याद्युक्तम् । सर्वे वेदा ऋगाद्या यत्पदं यस्य स्वरूपं आमनन्ति तपांसि च यत्प्रतिवदन्ति वेदाः, यज्ज्ञानमिच्छन्तो ब्रह्मचर्यं गुरुकुलवासादिरूपं गुह्येन्द्रियनियमनं वा चरन्ति तत्पदं भगवत्स्वरूपं ते तव सङ्ग्रहेण ब्रवीमि । एवं प्रतिज्ञातं भगवत्स्वरूपमुपदिशति- **ओमित्येतदिति ॥** एतत् त्वया पृष्टं भगवत्स्वरूपं ओं गुणपूर्णत्वादोंनामकमित्युपासीतेति शेषः । उपदेशसमाप्तौ वा इतिशब्दः । अन्यथाभावनिवृत्त्यर्थं वा । "इतिशब्दोऽन्यथाभावनिवृत्त्यर्थ उदाहृतः"(छा.भा.१.८) इत्युक्तेः ॥१.२.१५॥

**वरद.खं-** ब्रह्मोपदेशार्थं प्रतिजानीते यमः- **सर्वे वेदा इति ॥** सर्वाणि तपांसि यत् ब्रह्म प्रति कर्तव्यमिति वदन्तीत्यर्थः ॥१.२.१५॥

**रा.खं-** पृष्टं ब्रह्मस्वरूपं वक्तुं तन्महिमोक्तिपूर्वकं प्रतिजानीते- **सर्व इति ॥** आमनन्ति मुख्यवृत्त्या बोधयन्ति । यत्पदं यस्य स्वरूपम् । यत् प्रति यदुद्दिश्य यत्प्रीत्यर्थं सर्वाणि तपांसि कर्माणि वेदाः वदन्ति, यदिच्छन्तो यत्प्रीतिमिच्छन्तो महान्तः ब्रह्मचर्यं ब्रह्मगोचरश्रवणादिकं ऊर्ध्वरेतस्त्वादिव्रतं वा चरन्ति अनुतिष्ठन्ति तत्पदं ते तुभ्यं सङ्ग्रहेण सङ्क्षेपेण ब्रवीमीति । एवमुक्तो नचिकेता आह- **ओमित्येतदिति ॥** एतत् त्वया ब्रवीमीति प्रतिज्ञातं ब्रह्मस्वरूपम्, इति "सर्वे वेदाः" इति त्वदुक्तप्रकारेण ओम्, भवत्येवेत्यङ्गीकारार्थ ओङ्कारः । यद्वा तत्पदमित्युक्तं पदं किमित्यत उक्तम्- **ओमिति ॥** एतत्पदं ओमित्युच्यत इत्यर्थः ॥१.२.१५॥

उपनिषत्

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥१.२.१६॥**

**एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥१.२.१७॥**

भाष्यम्

**एतद्ध्येवाक्षरं ब्रह्म विष्ण्वाख्यं परमव्ययम् ।**
**सर्वस्याऽलम्बनं ज्ञात्वा मुच्यते नात्र संशयः ॥ इति च**
**॥१.२.१६-१७ ॥**

**व्यास-** ब्रह्मस्वरूपं निरूपयन् तज्ज्ञातुः फलमाह- **एतदित्यादिना ॥** एतत् त्वया पृष्टं ब्रह्मैव परमक्षरम् । एतत् श्रेष्ठमालम्बनमाश्रयं परं विलक्षणम् ॥ १.२.१६-१७ ॥

''एतद्ध्येवाक्षरम्'' इत्यादि ''तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्'' इत्युक्तभगवद्वाचकप्रणवमाहात्म्यमुच्यत इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे- **एतद्ध्येवेति** ॥ १.२.१६-१७ ॥

**वामन-** ''एतद्ध्येवाक्षरम्'' इत्यादावेतच्छब्देन जीवस्वरूपमनूद्य तस्य ब्रह्मत्वादिकमुपदिशतीति शङ्कानिवृत्त्यर्थं ''एतद्ध्येवाक्षरम्'' इत्यादिकं महावराहवचनमुद्धरति । अत्र ''विष्ण्वाख्यम्'' इति विशेषणात् सा शङ्का दूरतोऽपास्ता ॥ १.२.१६ ॥

आलम्बनं आधारः । नह्याधाराधेययोरेकत्वं युक्तम् । अत्र ब्रह्मलोको विष्णुलोकः । सः ज्ञानी तत्र गत्वा तमेवाप्य मोदमानः स्वावरैर्नित्यं महीयते ॥ १.२.१७ ॥

**वादि-** एतद् ब्रह्म सकलगुणपरिपूर्णत्वादोमिति कथ्यते । एतत्प्रमाण-वाक्यार्थभूतं वस्तु नाशरहितत्वादक्षरम्, गुणबृंहितत्वाद् ब्रह्म । एतदक्षरं नाशरहितं परं मुमुक्षुप्राप्यं च ॥ १.२.१६ ॥

एतद्ध्येवाक्षरमित्युक्तानुवादः ॥ १.२.१७ ॥

**वे.भा-** किञ्च ओमित्येतदिति तस्योंनामकत्वमुच्यते तच्च ब्रह्मण एव न जीवस्य । ''ओमिति ब्रह्म'' (तै.आ.७.८) इति श्रुतेः । ''ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः'' (गीता.१७.२३) इत्यादिस्मृतेश्च । किञ्च ''एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्'' इति परब्रह्मत्वादिव्यपदेशाद्विष्णुरेव न जीवः । ननु ओमित्येतदिति पूर्वमात्मतत्त्वस्योंशब्दवाच्यत्वं तत्प्रतीकत्वञ्चोक्तम् । अत्र तु एतदेवाक्षरं ओमित्यक्षरं ब्रह्म अपरं एतदेवाक्षरं परञ्च ब्रह्मेति तस्यैवोङ्कारस्य परापरब्रह्मत्वमुच्यत इति कथमिदं साधकमिति चेन्न । ओङ्कारस्य शब्दात्मकस्य जडत्वेन परापरब्रह्मत्वाभावात् । ''एतदालम्बनम्'' इत्युक्तसर्वाश्रयत्वासम्भवाच्च । नचाविद्यमानमप्युपासनार्थमुच्यत इति वाच्यम् । ''तत्त्वमसि'' इत्यादावप्यविद्यमानमेवैक्यं उपासनार्थमुच्यत इत्यापातात् ॥ अविद्यमानोपासनस्यानर्थफलत्वाच्च । प्रमाणविरोधाच्च नैवं व्याख्यानं युक्त-मिति भावेन मन्त्रद्वयार्थनिश्चायकं प्रमाणमुदाहरति- **एतद्ध्येवेति** ॥ परमित्यत्रापि एतद्ध्येवाक्षरमिति सम्बध्यते । एवञ्च ''एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्'' इति अनुवादेन विष्णवाख्यमिति व्याख्यानम् । अक्षरशब्दार्थोऽव्ययमिति ॥१.२.१६-१७॥

**वे.खं-** ओंनामकस्यैव भगवतो माहात्म्यमाह- **एतदिति** ॥ एतदेव ओंनामकमेवाक्षरं अव्ययं देहादिनाशशून्यं ब्रह्म गुणपूर्णं हि एतदेवाक्षरं परं सर्वोत्तमं हि । अत एवैतदेवाक्षरं ज्ञात्वा योऽधिकारी यदिच्छति तस्य तत् भवति हि प्रसिद्धमित्यर्थः ॥ १.२.१६ ॥

एतत् ओम्नामकं ब्रह्म श्रेष्ठमालम्बनं मुख्यतः सर्वाश्रयः । न राजादिवदाश्रय इत्याह- **एतत्परं विलक्षणमालम्बनमिति** ॥ ब्रह्मलोके सत्यलोके विष्णुलोके वा महीयते पूज्यते स्वावरैः ॥१.२.१७॥

**वरद-** ''एतद्ध्येवाक्षरं ब्रह्म'' इत्यादिना तत्र ब्रह्मत्वादिकं प्राणमात्रस्य विधीयत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **एतदिति** ॥१.२.१६-१७॥

**रा.खं-** ब्रह्मस्वरूपं विवक्षुः तज्ज्ञानिनः फलं महिमोक्तिपूर्वकमाह- **एतद्ध्येवेति** ॥ एतत् त्वया पृष्टमक्षरं अविनाशि ब्रह्मैव । एतदेव परं अक्षरं परमाक्षरनामकम् । हिशब्दौ उभयत्र प्रसिद्धिद्योतकौ । योऽधिकारी ज्ञात्वा यदिष्टमिच्छति कामयते तस्य तदिष्टं भवत्येवेत्यर्थः ॥१.२.१६॥

एतत् त्वया पृष्टं श्रेष्ठमालम्बनं सर्वेषां मुख्याश्रयम्, परमालम्बनं विलक्षणाश्रयम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके 'महीयते भगवल्लोके पूज्यत इति ॥१.२.१७॥

## उपनिषत्

**न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न**
**बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमानेऽपि देहे ॥१.२.१८॥**

## भाष्यम्

'देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाभवौ ।
न कुतश्चिद्यतो विष्णुर्जायतेऽतस्तदीक्षणात् ॥
भावाभावौ न विदुषो यस्माज्जीवो न कश्चन ।
जायते म्रियते वाऽपि स्वरूपेण कथञ्चन ।
अजो नित्योऽविकारश्च जीवः पुरमणन्नपि ॥'' इति च ॥

**अयं भगवान् कुतोऽपि न बभूव यस्मादतस्तद्वेत्ताऽपि विपश्चिन्न जायते, न म्रियते च । यतः कश्चिज्जीवः स्वतो न बभूव । देहसम्बन्धाद्धि जायते । विपश्चितस्तु देहसम्बन्धाभावान्न जायते न म्रियते च ॥**

॥१.२.१८ ॥

**व्यास-** ननु ब्रह्मलोकं प्राप्तोऽपि कदाचिज्जन्मादिमांश्चेत्तर्हि न तदतिशयितं फलमित्यत आह- **न जायत इति** ॥ कुतो न जायत इत्यतो बिम्बस्य जननादिरहितत्वादित्युक्तम्- **नायं कुतश्चिदिति** ॥ बन्धदशायामपि न जायते जीवः । किमु तदपगम इत्युक्तम्- **न बभूव कश्चिदिति** ॥ हेतुमुक्त्वा निगमयति- **अजो नित्य इति** ॥१.२.१८॥

**व्या.भा-** "न जायते म्रियते वा विपश्चित्" इत्येतद्व्याचष्टे- **देहेति** ॥ नेत्युत्तरत्रापि सम्बध्यते । न कुतश्चिदित्येतत्प्रकृते हेतुत्वाप्रतीतेर्व्याचष्टे- **न कुतश्चिदिति** ॥ भावाभावौ जनिमृती । "न बभूव कश्चित्" इत्येतत्प्रकृते हेत्वन्तरार्थत्वाप्रतीतेर्व्याचष्टे- **यस्मादिति** ॥ "अजो नित्यः" इति निगमनवाक्यं व्याचष्टे- **अत इति** ॥ अतः स्वरूपेण जननाभावात् अजो नित्यश्च । "शाश्वतोऽयं पुराणः" इत्येतदप्रतीतेर्व्याचष्टे- **अविकारश्चेति** ॥ "नायं कुतश्चिन्न बभूव कश्चित्" इति वाक्यद्वयं प्रमाणवचनेऽपि प्रकृतहेत्वर्थतया स्फुटमप्रतीतेः स्ववचनेन स्पष्टं व्याचष्टे- **अयमित्यादिना** ॥

॥१.२.१८॥

**वामन-** ननूत्पत्तिनाशवतो जीवस्य कथं नित्यावस्थितियोग्यत्वमित्याशङ्क्य परिहरति– **न जायत इत्यादिना** ॥ अस्य वाक्यस्याभिप्रायमपि "देहोत्पत्ति" इत्यादिना महावराहवचनेनैव प्रकाशयति । "न जायते म्रियते वा विपश्चित्" इत्यत्र ब्रह्मज्ञानिनोऽप्युद्भवाभवौ निषिद्ध्येते । देहोत्पत्तिविनाशावप्येतावेव जीवस्यानादितः सम्पृक्तौ । एवं जीवस्यैवन्त्वे तत्प्रहाणे

किं कारणमित्याकाङ्क्षायामाह– **नायं कुतश्चिदिति ॥** अयं विष्णुः देहतः स्वरूपतो वा कुतश्चिदपि न जायते म्रियते चेति । अतः तदीक्षणात् तद्विदुषोऽपि तत्प्रसादात् भावाभावौ न भवत इत्युक्तौ । अतद्विदस्तु स्यातामेवैतौ । परिहर्तुमशक्यत्वात् । अथ स्वरूपोत्पत्तिविनाशौ कस्यापि जीवस्य न स्यातामित्याह– **न बभूव कश्चिदित्यादिना ॥** ''कश्चित्'' अज्ञानी ज्ञानी वा जीवः इतः पूर्वं स्वरूपेण ''न बभूव'' नोदपद्यत । अथाप्येष स्वरूपेण सर्वथा न जायते न म्रियते चेति यस्मात् तस्मात् तद्विवक्षया जीवस्याजत्वादिविशेषणं पठ्यते । यद्यपि जीवः पुरं देहमणतीति पुराणशब्देन जन्मभागुच्यते । अथापि स्वरूपतो जन्माभावात् अज इत्युच्यते । मरणाभावात् नित्यश्चोक्तः । परिणामाख्यविकाररहितत्वात् शाश्वतश्च स भवति । अथापि न जायत इत्यादिवाक्यस्यान्वयभेदं स्ववाक्येनापि सुव्यक्तं वक्ति – **अयं भगवानित्यादिना ॥** यद्यपि नित्यानित्यपदार्थानां सत्तादिधर्माः परत एव भवन्ति । तथाऽप्यस्य सत्तामात्रमपि नान्याधीनम् । कुतः पुनः पारतन्त्र्यातिरेकलक्षणं जन्मेत्यर्थः । तद्धेतुरपि जन्माभावोक्तेस्तस्य तदभावः कैमुत्यान्निश्चीयते । यदि वा ज्ञानिनः स्वरूपोत्पत्तिनाशयोरेवाभावोऽभिप्रेतः स्यात् तर्हि अज्ञानिनस्तद्भावो ह्यनुज्ञातः स्यात् । नहि तस्यापि सोऽस्तीत्याह– **यतः कश्चिदिति ॥** नह्ययं स्वरूपेण जायत इति क्वाप्युक्तम् । नच तस्य स्वरूपनाशलक्षणं मरणमपि श्रूयते ॥१.२.१८॥

**वादि-** ''न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्'' इत्यत्र विपश्चित् भगवन्तमपरोक्षीकृत्य मुक्त इत्यर्थः । अयं बिम्बभूतः परमात्मा कुतश्चित् न जायते न म्रियत इति पूर्वेणान्यः । अत एव तत्प्रतिबिम्बभूतो मुक्तोऽपि न जायते न म्रियते चेति भावः । वर्तमान-प्रयोगान्मुक्त्यवस्थेति ज्ञायते । कैमुत्यमप्याह ''न बभूव कश्चित्'' इति । कश्चिद् यः कश्चिज्जीवः संसारदशायामपि न बभूव ''जीवो नित्यो धातुरस्य

त्वनित्यः'' इति वचनात् । देह एवोत्पद्यते नश्यति च, न तु जीवः । अत एवातीतसंसारदशाज्ञापनायातीतप्रयोगः ॥१.२.१८॥

**वे.भा-** ननु यदुक्तमिदं प्रकरणं विष्णुपरमेवेति तन्न । ''न जायते'' इति मन्त्रे जीवस्य जननमरणाभावोक्तेस्तस्य जीवविषयकत्वावगमात् । तथाहि विपश्चित् अविपरिलुप्तज्ञानस्वभावो न जायते न म्रियते च नायमात्मा कुतश्चित्कारणाद्बभूव स्वस्माच्च न बभूव कश्चित्पदार्थः । अतोऽयमात्मा अजो नित्यश्च शाश्वतः अपक्षयवर्जितः अत एव पुराणः पुरातन एवेति । नचैतत्प्रकरणस्य विष्णुपरत्वे मन्त्रः सङ्गच्छते । असङ्गतत्वादिति चेन्मैवम् । विपश्चिच्छब्दस्य ज्ञानिमात्रे निरूढस्याविपरिलुप्तज्ञानस्वभाव इति ज्ञान्यज्ञानिसाधारण्यकारणायोगात् । कुतश्चिन्न जायत इत्येतावता पूर्तेर्नायमित्यस्य वैयर्थ्यात् । कारणान्तराभावेऽपि स्वस्मादेवोत्पत्तिः-भवत्वित्याशङ्काया एवानुदये न ''न बभूव कश्चित्'' इत्यस्यावक्तव्यत्वाच्च । कारणमात्रस्यापि कुतश्चिदित्यनेन निषेधसम्भवात् । नचास्माकमसङ्गतिदोषः । ''एतदालम्बनं ज्ञात्वा'' इति प्रकृतज्ञानिनो जननमरणाभावलक्षणफल-प्रतिपादकत्वेन सङ्गतत्वादिति भावेन मन्त्रार्थनिश्चायकं प्रमाणमेवोदाहरति- **देहेति** ॥ न केवलं भगवतः किन्तु ज्ञानिनोऽपीत्यर्थोऽपिशब्दः । उद्भवाभवौ उत्पत्तिविनाशौ नेत्यस्य पूर्वोत्तराभ्यां सम्बन्धः । मुक्तिदशायामेतत् । अनेन मन्त्रतात्पर्यमुक्तं भवति । ननु देहोत्पत्तिविनाशाख्यौ उत्पत्तिविनाशौ यदि भगवत इव ज्ञानिनोऽपि न स्तस्तर्हि भगवद्विपश्चितोरविशेषः स्यादिति चेन्न । विपश्चित उत्पत्तिविनाशाभावयोर्भगवज्ज्ञानसाध्यत्वादित्यभिप्रेत्य ''न जायते म्रियते वा विपश्चित्'' इत्यत्र नायं कुतश्चिदिति हेतुप्रतिपादकमिति भावेन तद्व्याचष्टे- **कुतश्चिदिति** ॥ म्रियते चेति ग्राह्यम् । भावाभावौ देहोत्पत्तिविनाशौ । ''यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्' (भा.ता.३.१०.११) इत्यादेरित्यर्थः । ननु भागवद्विपश्चितोरुभयोरपि

देहोत्पत्तिविनाशाभावमङ्गीकृत्य विपश्चितस्तदभावो भगवज्ज्ञानसाध्य इति तयोर्विशेषः कुतः समर्थनीयः । ज्ञानिनः स्वरूपत एवोत्पत्तिविनाशाभावो भगवतस्तु देहतोऽप्युत्पत्तिविनाशाख्यौ उद्भवाभवौ न स्त इति कुतो न व्याख्यायत इत्यत आह- **यस्मादिति** ॥ तस्मात् देहतोऽप्युत्पत्ति-विनाशाख्यावेवोद्भवाभवौ ज्ञानिनो न स्त इति व्याख्येयम् । नतु स्वरूपोत्पत्तिविनाशाख्यौ । तदभावस्य सर्वसाधारण्येन ज्ञानिनो विशेषा-भावप्रसङ्गादित्यर्थः । ननु देहिनो जीवस्य कथं स्वरूपेण जननमरणाभाव इत्यतः प्राप्तं ''अजो नित्यः शाश्वतोऽयं पुराणः'' इति वाक्यं व्याचष्टे- **अज इति** ॥ स्वरूपेणेति वर्तते । पुरं देहमणन्नपीत्यनेन देहित्वस्याप्रयोजकत्वमुक्तम् । अनेन हन्यमानेऽपीत्यपिशब्दस्य पुराणशब्देनापि सम्बन्ध इत्युक्तं भवति । एवं प्रमाणमुदाहृत्य स्ववचनेनापि विवृण्वन् नायं कुतश्चिदित्यत्र प्रकृतविपश्चित एव परामर्श इति भ्रमं वारयन् पूर्वत्रायं हेतुरिति भावेन तद्व्याचष्टे- **अयं भगवानिति** ॥ कुतोऽपि कारणात् । उपलक्षणमेतत् । ''न म्रियते'' इत्यपि ग्राह्यम् । म्रियते चेत्यनेन वाशब्दश्चशब्दार्थ इत्युक्तं भवति । अत्र ज्ञानिनो जननमरणाभावौ देहोत्पत्तिविनाशाभावाख्यावेव विवक्षितौ नतु स्वरूपेण जननमरणाभावावित्यभिप्रेत्य ''न बभूव कश्चित्'' इति वाक्यं व्याचष्टे- **यत इति** ॥ स्वतः स्वरूपेण म्रियते न चेति ग्राह्यम् । तर्हि का गतिर्जीवोत्पत्त्यादिवाक्यानामित्यत आह- **देहसम्बन्धादिति** ॥ देह-वियोगान्म्रियते चेति ग्राह्यम् । हिशब्दः प्रमाणप्रसिद्धिमाह, हेतौ वा । यस्माद्देहसम्बन्धादेव जायते तस्मात्कश्चिदपि स्वतो न बभूवेति । अस्त्वेवं सर्वेषां जीवानां स्वरूपेणोत्पत्तिविनाशाभावौ । किं तत इत्यत आह- **विपश्चितस्त्विति** ॥ तुशब्दोऽज्ञानिभ्यो विशेषद्योतकः । यतः कश्चिदपि जीवः स्वतो न बभूव अतो विपश्चितो मुक्त्यनन्तरं कर्मनिर्मितदेहसम्बन्धा-भावान्न जायते । तद्वियोगाभावान्न म्रियत इत्येव वक्तव्यम् । नतु स्वरूपोत्पत्ति-विनाशाभावेन । तस्य सर्वजीवसाधारणत्वेन ज्ञानफलत्वानुपपत्तेरिति भावः ॥

**वे.खं-** ननु ब्रह्मलोकं प्राप्तस्यापि ज्ञानिनो यदि जनिमृती तदा न तदतिशयितं फलमित्यत आह- **न जायत इति ॥** विपश्चित् ज्ञानी ब्रह्मलोकं प्राप्तो न जायते न म्रियते च । कुतः? यतोऽयं भगवान् कुतोऽपि न बभूव उपलक्षणमेतत् । न म्रियते च । अतस्तद्वेत्तापि न जायते न म्रियते च । अत्र विपश्चितो जननमरणराहित्यं नाम देहोत्पत्तिविनाशशून्यत्वमेव नतु स्वरूपोत्पत्तिविनाशशून्यत्वम् । तस्य सर्वजीवसाधारणत्वादिति भावेनाह- **न बभूवेति ॥** यतः कश्चिदपि जीवः स्वरूपेण न बभूव । न जातो न जायते न जनिष्यते च । अत एव न म्रियते च । किन्तु देहसम्बन्धादेव जायते म्रियते च । अतो विपश्चित् देहोत्पत्तिविनाशशून्यत्वादेव न जायते न म्रियते चेत्यर्थः । ननु जीवस्य देहित्वात्कथं स्वरूपेण जननाद्यभाव इत्यत आह- **अज इति ॥** जीवः पुराणोऽपि पुरं देहमणन्नपि स्वरूपेणाजो नित्यः शाश्वतो अविकारश्च । नित्यत्वमेव स्पष्टमाह- **न हन्यत इति ॥** देहे हन्यमानेऽपि जीवः स्वरूपेण न हन्यते तस्य ततो भिन्नत्वादिति भावः ॥१.२.१८॥

**वरद-** ''एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते'' इत्युक्तं तत्र कियत्कालं महीयत इत्युच्यते ''न जायते न म्रियते विपश्चित्'' इत्यादि, तद्व्याचष्टे- **देहेति ॥** यौ देहोत्पत्तिदेहनाशलक्षणावुद्भवाभिभवौ तौ ज्ञानिनोऽपि न स्त इति योजना । न केवलमीश्वरस्यैव तौ न स्तः किन्तु ज्ञानिनोऽपि इत्यपिशब्दः, ज्ञानिन उद्भवाभिभवौ किमिति न स्त इत्यतो नायं कुतश्चिदित्येतद्व्याचष्टे- **यत इति ॥** अत्र नेति पदमध्याहर्तव्यम् । विष्णुर्न जायते यतः अतस्तदीक्षणात्तज्ज्ञानात् कारणाद्विदुषोऽपि तौ भावाभावौ स्तः । ''यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्'(भा.ता.३.१०.११) इति वचनादित्यर्थः । मुक्तस्य जन्ममरणे न स्त इत्यत्र निमित्तान्तरमुच्यते । ''कुतश्चिन्न बभूव कश्चित्'' इति । तद्व्याख्याति- **यस्मादिति ॥** यस्मात्कश्चन संसार्यपि जीवस्वरूपेण न जायते न म्रियते च । अपि तर्हि

जीवसम्बन्धेनैव जायते म्रियते च । मुक्तस्य देहसम्बन्धाभावान्न जननं मरणश्चेत्यर्थः । स्वरूपेण जीवो न जायते चेत्कथम्भूतश्च मे स्वरूपमित्यत आह- **अक्षय इति ॥** मुक्तानां जन्ममरणाभावे प्रमाणवचनोक्तां युक्तिं स्ववाक्येन विवृणोति- **अयमिति ॥** विपश्चितस्तु देहसम्बन्धाभावात्स विपश्चिन्न जायते न म्रियते चेत्यर्थः ॥१.२.१८॥

**रा.खं-** ब्रह्मलोकस्थः पुनः कथम्भूत इत्यतो जन्मादिहीनश्चेत्याह- **न जायत इति ॥** नेत्यग्रेऽप्यन्वेति । विपश्चित् ज्ञानी देहयोगवियोगलक्षण-जनिमृतियुक्तो न भवति । कुत इत्यतो हेतुद्वयमाह- **नायमिति न बभूवेति ॥** अयं भगवान् कुतश्चिदपि न जायते न म्रियत इत्यनुकर्षः । भगवतो जन्ममृतिहीनत्वात् तादृशभगवद्विपश्चितोऽपि देहयोगवियोगरूपजन्ममृती न स्त इति । स्वरूपतो जन्माद्यभावाच्च नोक्तरूपजन्ममृती ज्ञानिन इति भावेन हेतोरसिद्धिनिरासाय तत्साधयितुं स्वरूपेण जननं बन्धवेलायामपि नास्ति किमुत मुक्तावित्याह- **न बभूव कश्चिदित्यादि ॥** अयं जीवः पुराणः पुरं देहमणति गच्छतीति पुराणः देहबन्धयुक्तः सन्नपि अजो नित्यतः स्वरूपेण जन्ममृतिहीनः, शाश्वतश्च अविकारश्च, किमु मुक्तौ । कश्चिदपि न बभूव स्वरूपेण न जायत इति । न नश्यतीत्युपलक्ष्यते । जीवस्य कदाऽपि स्वरूपेण जन्ममृत्योरभावात् देहयोगादिनैव जन्मादेर्वाच्यत्वात् सर्वथा देहबन्धान्मुक्ति-दशायां कथं देहयोगादिरूपजन्ममृती विपश्चितः स्यातां इति न बभूव कश्चिदित्यनेनोक्तस्य स्वरूपतो जन्माद्यभावस्य न जायते न म्रियत इत्युक्तार्थे हेतुत्वं बोध्यम् । यद्वा, न बभूव कश्चिदित्यनेनैव कदाऽपि स्वरूपेण न बभूव न नश्यतीति न जायत इत्यादौ उक्तेऽर्थे स्वरूपाजननादिहेतुमुक्त्वोपसंहरति । स्वरूपस्यानादिनित्यत्वं ''अजो नित्यः'' इत्यादिना । प्राग्वदेवार्थः । ननु पुराणत्वे देहहानिरस्ति किमित्यतो नेत्याह- **न हन्यत इति ॥** १.२.१८ ॥

उपनिषत्

**हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१.२.१९॥**

भाष्यम्

**जीवस्यापि स्वतो मरणाभावादुभौ तौ न विजानीतः ॥**

**व्यास-** ननु कथं जीवो देहे हन्यमानेऽपि न हन्यत इति यज्ञदत्तस्याहं हन्ता तेनाहं हतः इति तत्प्रतीतिसिद्धत्वाद्धननस्य इत्यतस्तौ भ्रान्तावित्याह- **हन्तेति ॥** हन्ता आत्मानं हन्तुं हन्तारं मन्यते चेद्धतश्चात्मानमनेनाहं हत इति मन्यते चेत् । तावुभौ न विजानीत इत्यादि योजना ॥१.२.१९॥

**व्या.भा-** "उभौ तौ न विजानीतः" इत्येतद्युक्तेरनुक्तत्वाद्युक्तिपूर्वं व्याचष्टे- **जीवस्यापीति ॥** अपिशब्देनेश्वरं समुच्चिनोति । स्वतः स्वरूपेण "अणोरणीयान्" इत्यस्य प्रकृतजीवपरत्वप्रतीतिं निवारयतेश्वरस्याप्रकृतत्व-शङ्का निवारिता ॥१.२.१९॥

**वामन-** नन्वेवमप्यहमहितं हनिष्यामि, अयमनेन हत इत्यादि-व्यवहारदर्शनात् स्वरूपोत्पत्तिनाशावपि तस्य स्यातामित्यत आह– **हन्ता चेदिति ॥** यौ तौ जीवस्वरूपापेक्षया तं हनिष्यामि अहं हतोऽस्मीति च मन्वानौ तावुभवपि तत्त्वं न जानीतः । नहि तत्स्वरूपस्य हन्यत्वं जन्यत्वं वा प्रमाणसिद्धम् । हननादिव्यवहारस्तु देहमात्रविषय एव ॥१.२.१९॥

**वादि-** हन्तुं हननशीलं हन्तारमित्यर्थः ॥१.२.१९॥

**वे.भा-** ननु "उभौ तौ न विजानीतः" इति हन्तृत्वहतत्वज्ञानस्य भ्रान्तित्वमुक्त्वा तत्र "नायं हन्ति न हन्यते" इत्यर्थाभावो हेतुरुच्यते । तदयुक्तम् । देहविनाशरूपहननकर्मत्वस्य तत्कर्तृत्वस्य च सत्त्वादित्यतो

हेतुहेतुमद्भावं स्फोरयन् हेतुवाक्यं व्याचष्टे- **जीवस्यापीति** ॥ देहविनाशाख्य-मरणवत्त्वेन प्रसिद्धस्यापीत्यपिशब्दः । स्वतः स्वरूपेण ॥१.२.१९॥

**वे.खं-** नन्वेतत्कथम्? जीवहननस्य अहं हन्ता तेनाहं हत इत्यादिप्रत्यक्ष-सिद्धत्वादित्यतस्तस्य भ्रान्तित्वमाह- **हन्तेति** ॥ हन्ता मैत्रदेहहननकर्ता चैत्रः स्वात्मानं हन्तुं हन्तारं मैत्रजीवस्वरूपहननकर्तारं मन्यते चेत् हतश्च मैत्रस्य स्वरूपं हतं मन्यते चेत् तर्हि तौ उभौ न विजानीतो न सम्यग्जानीतः भ्रान्ताविति यावत् । कुत इत्यतस्तत्रार्थभावं हेतुमाह- **नायमिति** ॥ अयं चैत्रो न हन्ति मैत्रस्वरूपं अयं मैत्रो वा स्वरूपेण न हन्यते, यतोऽतो देहविनाशनिमित्तकोऽयं भ्रम इत्यर्थः ॥१.२.१९॥

**वरद-** ननु "उभौ तौ न विजानीतः" इत्यनेन मुक्तस्यायं हन्ता अस्तीति मन्यमानो न जानातीति यदुच्यते तन्न युज्यते । मुक्तस्य हन्तास्तीत्यस्यैव केनाप्यनाशङ्कितत्वेन तद्वेत्तुरज्ञानिकत्वकथनासम्भवादित्यतः तदमुक्तविषय-मित्याह- **जीवस्येति** ॥ अमुक्तजीवस्यापि देहसम्बन्धेन निमित्तेन विना स्वतो मरणाभावात्तस्य कश्चिद्धन्तास्तीति ज्ञाता केनचिद्धत इति ज्ञाता च न विजानीत इत्युक्तविषयमेवैतद्वाक्यमित्यर्थः । न चामुक्तजीवस्य पूर्वमप्रकृतत्व-दोषः । "कुतश्चिन्न बभूव कश्चित्" इत्यमुक्तजीवस्यापि प्रकृतत्वात् ॥१.२.१९॥

**रा.खं-** नन्वेवं हन्ता हतश्चाहमिति प्रतीतिः कथमित्यतो भ्रान्तिरित्याह- **हन्तेति** ॥ जीवस्वभावं हन्तुमिति योज्यम् ॥ **न विजानीत इति** ॥ जीवस्वरूपस्य नित्यत्वादिति भावः ॥१.२.१९॥

उपनिषत्

**अणोरणीयान् महतो महीयान् आत्माऽस्य**
**जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति**
**वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥**

**भाष्यम्**

**एवं नित्यस्य जन्तोर्गुहायां निहितः । ए विष्णौ क्रतुर्यस्य सोऽक्रतुस्तन्निश्चयः । आत्मनः सकाशान्महिमानं महामानम् ।**

**'जीवाद् गुणपरीमाणं यस्माद्विष्णोर्महत्तरम् ।**
**तस्माज्जीवात्स महिमा विष्णुरित्युच्यते श्रुतौ ॥''**

**इति च १.२.२०॥**

**व्यास-** उपदेशप्रकारमेवाह- **अणोरणीयानिति** ॥ ''एतदालम्बनं ज्ञात्वा'' इत्युक्तब्रह्मज्ञानस्य प्रथमभाविसाधनमाह- **तमिति** ॥१.२.२०॥

**व्या.भा-** ''आत्मास्य जन्तोर्निहितो गुहायाम्'' इत्येतद्व्याचष्टे- **एवमिति** ॥ एवमुक्तप्रकारेण नित्यस्येति । अक्रतुः क्रतूपलक्षितकर्मरहितः तं पश्यतीति प्रतीतिं निवारयन् व्याचष्टे- **अ इति** ॥ एवं तर्हि कथं क्रतोः कर्मात्मकत्वात्तेन तं पश्यतीत्यत आह- **तन्निश्चय इति** ॥ तन्निश्चयः सम्यक् तत्परोक्षज्ञानम् । आत्मनः स्वस्य महिमानं पश्यतीत्यन्यथाप्रतीतिं निवारयन्व्याचष्टे- **आत्मन इति** ॥ आत्मनः सकाशान्महिमानं महामानम् । उक्तमर्थं दृढीकुर्वन्नात्मनो जीवाद्विष्णुः कस्मान्महिमेत्युक्त इति शङ्काञ्च परिहरति- **जीवादिति** ॥१.२.२०॥

**वामन-** साक्षान्मुख्यस्य विष्णोरणोरणीयस्त्वादिविधिवाक्यं दर्शयति– **अणोरणीयानित्यादि ॥ एवं नित्यस्येति** ॥ एवं स्वरूपापेक्षया नित्यस्य जन्तोः हृदयगुहायां निहितः परमनित्यः परमात्मा । एवं उक्तलक्षणसाहित्येन तस्मिन्नकाराख्ये विष्णौ निश्चयज्ञानवान् अक्रतुः तं भगवन्तं पश्यति तस्यैव धातुः प्रसादात् । अथ तत्प्रसादात् वीतशोकश्च भवति । महीति महदुच्यते । ''महि शर्म यच्छ'' इत्यादिवत् । अतः स्वस्य सकाशान्महापरिमाण-मनन्तगुणपरिमाणमित्यर्थः । अत्रापि ''जीवात्'' इत्यादिकं महावराहवचन-

प्रमाणमाह । अणुपरिमाणात् जीवात् विष्णोर्गुणपरिमाणं आनन्त्येन महत्त्वात् महत्तरमित्युक्तम् । परीमाणमिति मात्राधिक्याच्चैतदवगम्यते । "आधिक्ये अधिकम्" इति सूत्रात् ॥१.२.२०॥

**वादि-** अक्रतुः अकारवाच्यपरमात्मविषयक्रतुः निश्चयो यस्य सः अक्रतुरित्यर्थः । "विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति श्रुतेः । यथाश्रुतार्थस्य बाधितत्वादुक्त एवार्थ इति भावः । महिमानं "माङ् माने" इति धातोः महि महत् मा मानं यस्य सः महिमा, तं महिमानमित्यर्थः । सकलजीवेभ्योऽप्युत्तमत्वेनैवापरोक्षज्ञानं न त्वैक्येनेत्यर्थसूचनायेदं विशेषणम् ॥१.२.२०॥

**वे.भा-** ननु "अणोरणीयान्" इति मन्त्रो जीवपर एव । "हन्ता चेन्मन्यते हन्तुम्" इति जीवस्यैव प्रकृतत्वात् । अन्यथा मध्ये जीवनित्यत्व-कथनस्यासङ्गतत्वादित्यतस्तस्योपयोगं दर्शयन् "अस्य जन्तोर्निहितो गुहायाम्" इति वाक्यं व्याचष्टे- **एवमिति** ॥ अस्येत्यस्यैवार्थः- **एवं नित्यस्येति** ॥ तथाच परमात्मनो नित्यभूतजीवहृद्गतत्वं वक्तुं जीवस्य नित्यत्वमुक्तमिति नासङ्गतिरिति भावः । नच जीवस्याणोरणीयस्त्वं महतो महीयस्त्वं वा युज्यते । तस्याणुत्वात् । नचाणु महद्वा यल्लेकेऽस्ति तत्तदात्मकत्वेन तथा व्यवहारः । तर्हि अणुर्महानित्येव वक्तव्यत्वापातात् । "अणोरणीयान्महतो महीयान्" इति अणुमहद्भिन्नत्वस्यैवावगमाच्च । नचाणोः श्यामाकादेरणीयानिति श्यामाकाद्यपेक्षया सूक्ष्मवस्त्वात्मकत्वं महतः पृथिव्यादेरपि महानिति पृथिव्याद्यपेक्षया स्थूलवस्त्वात्मकत्वमुच्यत इति वाच्यम् । पञ्चम्यन्ताणु-महच्छब्दयोः सामान्यशब्दत्वेन सर्वाणुमहद्विषयत्वात् । नच बाधकं विना सामान्यशब्दो विशेषपरोऽङ्गीकर्तुमुचितः । नचैकस्यात्मनो विरुद्धपरिमाण-द्वयासम्भवादेवमङ्गीकारः । अणुमहत्पदार्थात्मकत्वस्य सुतरां विरुद्धत्वात् । यथाच न विरोधस्तथोपपादितमन्यत्राचार्यैः । वक्ष्यते च विरुद्धधर्मघटकमैश्वर्य

भगवतः । ''अक्रतुः अकामः दृष्टादृष्टविषयोपरतः'' इति व्याख्यानमसत् । दृष्टादृष्टविषयवैराग्यस्य साक्षाद्दर्शनहेतुत्वाभावादिति भावेन तद्व्याचष्टे- **ए विष्णाविति** ॥ अ इत्यस्य सप्तमी ए इति । अशब्दो ब्रह्मवाची । ''अ इति ब्रह्म'' इति श्रुतेरिति भावः । अनेन अक्रतुः क्रतूपलक्षितकर्मरहित इति यथाश्रुतप्रतीतिरप्यपास्ता । तर्हि विष्णुविषयक्रतुमान् पश्यतीति कथम् । क्रतोः कर्मात्मकत्वेन तस्य साक्षादपरोक्षज्ञानसाधनत्वाभावादित्यत आह- **तन्निश्चय इति** ॥ श्रवणादिरूपनिश्चय एव क्रतुशब्दार्थ इति भावः । आत्मनः स्वस्य महिमानं माहात्म्यमित्यन्यथाप्रतीतिनिरासाय महिमानमात्मन इत्येतद्व्याचष्टे- **आत्मन इति** ॥ षष्ठीभ्रमवारणाय सकाशादित्युक्तम् । जीवादित्यर्थः । अन्यथा ''वीतशोको भवति'' इत्यस्यानुपपत्तिः । प्रमाण-विरोधाच्च नान्यथाव्याख्यानं युक्तमिति भावेन तदर्थनिश्चायकं प्रमाणमाह- **जीवादिति** ॥ श्रुतौ ''महिमानमात्मनः'' इत्यस्याम् ॥१.२.२०॥

**वे.खं-** उपदेशप्रकारमेवाह- **अणोरिति** ॥ आत्मा भगवानणोरणीयान् सूक्ष्मादपि सूक्ष्मतरः । महतो महीयान् स्थूलादपि स्थूलतरः । स्थूलस्यैवाणुप्रतियोगित्वात् अणोरणीयस्त्वमेव लेशेन दर्शयति । अस्यैवं नित्यस्य जन्तोर्जीवस्य परमसूक्ष्मस्यापि गुहायां हृदये निहित इति । ''एतद्ध्येवाक्षरं ज्ञात्वा'' इत्यत्र न ज्ञानमात्रं विवक्षितं किन्त्वपरोक्षज्ञान-मेवेति भावेन तत्साधनं दर्शयन् तस्य फलमाह- **तमिति** ॥ अक्रतुः अशब्दो विष्णुवाची । ए विष्णौ क्रतुः निश्चयो यस्यासौ अक्रतुस्तन्निश्चयवानधिकारी आत्मनो जीवात् महिमानं महि महत् मानं गुणपरिमाणं यस्य स महिमानस्तं परमात्मानम् । धातुः धारकस्य परमात्मनः प्रसादात् पश्यति । ततश्च धातुः प्रसादादेव वीतशोको भवतीत्यर्थः ॥१.२.२०॥

**वरद-** ''आत्मास्य जन्तोर्निहितो गुहायाम्'' इत्यत्रैव नित्यो यो जीवः योऽस्य जन्तोर्गुहायां निहित इत्येवमर्थो विवक्षित इति प्रतीतिनिरासायार्थ-

माह- **एवमिति** ॥ अक्रतुरिति कर्मरहित इति प्रतीतिनिरासायार्थमाह- **एवमिति** ॥ इदमपि व्याख्यानं न युक्तम् । साक्षात्कर्मणो ज्ञानसाधनत्वाभावादित्यत आह- **तदिति** ॥ क्रतुशब्दस्य निश्चयार्थत्वाङ्गीकारात् नैतच्चोद्यावकाश इति ॥१.२.२०॥

**रा.खं-** एवमुपदिश्यमानब्रह्मज्ञानिनः फलमुक्त्वा प्रेतजीवनियन्तृब्रह्मोपदिशति- **अणोरणीयानिति** ॥ अस्य न बभूवेत्यादिनोक्तदिशा अनादिनित्यस्य जन्तोर्जीवस्य गुहायां हृदि प्रेरकतया निहितो नितरां स्थित इति । एतदालम्बनं ज्ञात्वेत्युक्तौ तज्ज्ञानस्य प्रथमभाविसाधनमाह- **तमिति** ॥ तं अणीयस्त्वाद्युक्तगुणयुक्तं आत्मनः स्वस्मात् महिमानं महान्तं महागुणपरिमाणं अक्रतुः अकारवाच्यविष्णुविषयकक्रतुशब्दितनिश्चयवान् धातुः हरेः प्रसादात् पश्यति ध्यानद्वारा साक्षात्करोति । ततश्च वीतशोको भवति ॥१.२.२०॥

### उपनिषत्

**आसीनो दूरं व्रजति शयानो याति सर्वतः ।**
**कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥१.२.२१॥**

### भाष्यम्

**ऐश्वर्यादेव "आसीनो दूरं व्रजति" इत्यादि ।**

**'आसीनो दूरं व्रजति शयानो याति सर्वतः ।**
**ऐश्वर्याद्भगवान्विष्णुर्विरुद्धं घटयत्यसौ ॥" इति च ॥**

**१.२.२१ ॥**

**॥ इति काठकभाष्ये प्रथमाध्यायस्य द्वितीया वल्ली ॥**

**व्यास-** पुनश्च महिमानमेवाह- **आसीन इत्यादिना** ॥ मदश्चामदश्च यस्माद्भवतः असौ मदामदः । तं मदामदम् ॥१.२.२१॥

**व्या.भा-** विरोधादासीनत्वं तत्त्वम् । दूरव्रजनं तु भ्रान्तमित्यन्यथाप्रतीतिं निवारयंस्तद्धटकमाह- **ऐश्वर्यादिति ॥** युज्यत इति शेषः । आसीनस्य दूरव्रजनं व्याहतेरयुक्तमित्यतो घटकमुक्तम् । तत्कुत इत्यतस्तत्प्रमाणं पठति- **आसीन इति** ॥१.२.२१॥

**वामन-** 'आसीनः'' इत्यादिलोकविलक्षणानपि धर्मान् विष्णोरुपदिशति । तत्र युक्तिं भगवानाह– **ऐश्वर्यदेवेति ॥** नहीदं मायाशक्त्येति मथितार्थः । तदपि ''आसीनः'' इत्यादि महावराहवचनेन दृढयति । स्वभक्तान् मदयति स्वाभक्तान् न मदयतीति भगवान् मदामदः । मदन्यः प्राकृतपुरुषः ॥

**वे.भा-** नन्वासीनस्य दूरव्रजनादिकं विरुद्धम् । नहि भगवान् मायावी । येनैन्द्रजालिकक्रियावदुपपत्तिः स्यादित्यत आह- **ऐश्वर्यदेवेति ॥** तत्र प्रमाणमाह- **आसीन इति ॥** अनेन ''अणोरणीयान् महतो महीयान्'' इत्येतद्विरुद्धमिति परास्तम् ॥१.२.२१॥

**वे.खं-** पुनरपि तन्माहात्म्यमाह- **आसीन इति ॥** आसीनः उपविष्ट एव दूरं व्रजति । शयान एव सर्वतो याति परमैश्वर्यात् । तं मदामदं मदः सुखं अमदो दुःखं मदसहितोऽमदो येनासौ मदामदस्तं विबुधासुरसुख-दुःखकारणमिति यावत् । भगवन्तं मदन्यः को वा मद्वत् ज्ञातुमर्हति न कोऽपीत्यर्थः । यो मदन्यस्तं मदामदं को वा साकल्येन ज्ञातुमर्हति । न कोऽपीति वा योज्यम् । यद्वा मदन्यः कः ब्रह्मैव तं मदामदं देवं सकलवेदोक्तप्रकारेण ज्ञातुमर्हति नत्वन्य इत्यर्थः ॥१.२.२१॥

**वरद-** ''महिमानमात्मनः'' इति स्वस्य माहात्म्यश्चेत्यर्थ इति प्रतीतिनिरासायाह- **ऐश्वर्यादिति ॥** अस्मिन्नेव व्याख्याने संवादश्चाह- **आसीन इति** ॥१.२.२१॥

**वरद.खं- मदामदमिति ॥** सुजनानां सुखकारणत्वात् मदम्, दुर्जनानां दुःखकारणत्वादमदम् ॥१.२.२१॥

**रा.खं-** पुनश्च भगवतो महिमानमेवाऽऽह- **आसीन इति ॥** सामर्थ्यातिशयादेवाऽसीन इत्यादिविरुद्धधर्मवत्त्वं तस्य ज्ञेयम् । मदामदं मदश्चामदश्च सुखमसुखं ततो भवतीति मदामदं सुखासुखहेतुं तं देवं मदन्यः कः ज्ञातुमर्हति ॥१.२.२१॥

उपनिषत्

**अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥१.२.२२॥**

**व्यास-** अनवस्थेषु नश्वरेषु ॥१.२.२२॥

**वामन-** अवस्थानशक्तिरहितेष्ववस्थापकत्वेनावस्थितम् ॥१.२.२२॥

**वे.खं-** अशरीरं प्राकृतशरीरशून्यं अनवस्थेषु नश्वरेष्वपि शरीरेषु अवस्थितं महान्तं विभुं व्याप्तमात्मानं धीरो मत्वा न शोचति ॥१.२.२२॥

**वरद.खं-** अशरीरं स्वयं शरीररहितम् । अनवस्थेषु अनित्येषु शरीरेष्ववस्थितं आत्मानं मत्वा न शोचति ॥१.२.२२॥

**रा.खं-** पुनस्तन्महिमोक्तिपूर्वकं तज्ज्ञानिनः फलमाह- **अशरीरमिति ॥** अनवस्थेषु नश्वरेषु शरीरेषु प्राणिदेहेषु अशरीरं तच्छरीरनिमित्तकविकाररहिततयाऽवस्थितं महान्तं देशकालगुणतो महान्तं विभुं समर्थमात्मानं स्वामिनं मत्वा धीरो न शोचति मुक्तो भवति ॥१.२.२२॥

उपनिषत्

**नायमात्मा प्रवचनेन लभ्यो न मेधया न**
**बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष**
**आत्मा विवृणुते तनूं स्वाम् ॥१.२.२३॥**

**व्यास-** श्रवणादिना तज्ज्ञानोत्पत्तेस्तत्प्रसादात् "तमक्रतुः पश्यति" इत्युक्तिः कथमित्यत आह- **नायमात्मेति** ॥१.२.२३॥

**वादि-** "यमेवैष वृणुते" इत्यत्र एष परमात्मा यं वृणुते मदीयोऽयमित्यङ्गीकरोति, प्रसन्नो भवतीति यावत्, तेनैव लभ्य इत्यर्थः ॥१.२.२३॥

**वे.खं-** धातुः प्रसादो ज्ञानमोक्षहेतुरित्युक्तमयुक्तम् । प्रवचनादिनैव ज्ञानमोक्षयोरुपपत्तेरित्यत आह- **नायमिति** ॥ अयमात्मा भगवान् प्रवचनेन वेदव्याख्यानेनैव लभ्यो ज्ञेयः प्राप्यश्च न, मेधयैव लभ्यो न, नापि बहुना श्रुतेनैव, किन्तु एष आत्मा प्रसन्नः सन् मदीयोऽयमिति यं वृणुते तेन लभ्यो ज्ञेयः प्राप्यश्च । ततश्चैष आत्मा तस्याधिकारिणः स्वां तनुं स्वस्वरूपं पूर्वमविद्यावृतं विवृणुते प्रकाशयतीत्यर्थः । यद्वा ज्ञानमोक्षहेतुः प्रसादोऽपि न प्रवचनादिमात्रसाध्यः किन्तु भक्त्येकसाध्य इत्याह- **नायमिति** ॥ लभ्यः प्रसन्नो भवति । वृणुत इत्यनेन भक्तत्वं सूचितम् । ततश्च तस्याधिकारिण एष आत्मा स्वस्वरूपं तद्योग्यतानुसारेण विवृणुते प्रकाशयतीत्यर्थः ॥१.२.२३॥

**वरद.खं-** दर्शनञ्च भक्त्यैव भवतीत्याह- **नायमात्मेति** ॥१.२.२३॥

**रा.खं-** ननु श्रवणाद्युपायेनापि तज्ज्ञानसम्भवात् धातुः प्रसादात् तं पश्यतीत्यनुपपन्नमित्यत आह- **नायमिति** ॥ प्रवचनेन व्याख्यानेन लभ्यो दर्शनीयो न भवति । न मेधया स्वकीयप्रज्ञाबलेन न लभ्यः । बहुना श्रुतेन श्रवणेन न लभ्यः । किन्तु यं एष भगवान् वृणुते स्वीकरोति, यस्मै प्रसीदतीति यावत्, तेनैव लभ्यो दर्शनीयः । कथम् ? तस्य प्रसादविषयस्य एष आत्मा स्वां तनुं विवृणुते प्रदर्शयतीति । कथमन्यथा अव्यक्तैकस्वरूपस्य तत्प्रसादेन विना अपरोक्षतेति भावः । तथा च सूत्रं "अतोऽनन्तेन तथा हि लिङ्गम्" (ब्र.सू.३.२.२७) इति ॥१.२.२३॥

उपनिषत्

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥१.२.२४॥**

**व्यास-** तत्प्रसादात्तत् ज्ञानं चेत् श्रवणादिवैयर्थ्यमित्यत आह- **नाविरत इति ॥** अशान्तो भगवन्निष्ठारहितः । असमाहितोऽस्थिरमनाः ॥१.२.२४॥

**वामन-** दुश्चरितविरतिवर्जित एनं न प्राप्नुयात् । किन्तु सदाचार-भगवन्निष्ठासमाधानादिमानेव प्रकृष्टज्ञानेन भगवन्तमाप्नुयात् । भक्त्यभावे प्रवचनादिनाऽपि प्रयोजनाभावात् ॥ १.२.२४ ॥

**वे.खं-** शमदमादिसाधनैरेव भगवत्प्राप्त्युपपत्तौ किं तज्ज्ञानेनेत्यत आह- **नेति ॥** यो दुश्चरितात् इन्द्रियाणां दुष्टविषयेषु चरणादविरतोऽनिवृत्तो न किन्तु सर्वात्मना निवृत्त एव निगृहीतेन्द्रिय एवेति यावत् । अशान्तो भगवन्निष्ठबुद्धिरहितो न, किन्तु तन्निष्ठबुद्धिरेव असमाहितो यथावस्तु-ज्ञानादिशून्यो न, किन्तु यथावस्तुज्ञानादिमानेव अशान्तमानसो विषया-लम्बुद्धिशून्यो न, किन्तु विषयालम्बुद्धिमानेव सोऽपि प्रज्ञानेनैव भगवदपरोक्षज्ञानेनैव एनं प्राप्नुयादित्यर्थः ॥ १.२.२४ ॥

**वरद.खं-** नचैवमन्यसाधनानां वैयर्थ्यमित्याह- **नाविरत इति ॥** १.२.२४

**रा.खं-** तद्दृष्टेः प्रसादैकलभ्यत्वे किं वैराग्यादिसाधनैरित्यतः ज्ञानद्वारा प्रसादहेतुतया तदप्यावश्यकमिति भावेनाह- **नाविरत इति ॥** दुश्चरितात् दुराचारात् अविरतः अनिवृत्तः, दुराचारीति यावत्, प्रज्ञानेन प्रज्ञानद्वारा एनं भगवन्तं तत्प्रसादं नाऽप्नुयादित्यन्वयः । एवमग्रेऽपि । अशान्तः श्रवणमननध्यानैर्भगवन्निष्ठारहितः । असमाहितः यथा वस्तु तथा ज्ञानहीनः । अशान्तमनसः विषयभोगे अलम्बुद्धिहीनः, विषयलम्पट इति यावत् ॥
॥१.२.२४॥

## उपनिषत्

**[1]यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ १.२.२५ ॥**

**॥ इति काठकोपनिषदि प्रथमाध्यायस्य द्वितीया वल्ली ॥**

**व्यास-** पुनश्च महिमानमेवाह- **यस्येत्यादिना ॥** उपसेचनं शाकम्, उपरि सेचनं घृतं वा । इत्था एवं गुणविशिष्टत्वेन । यत्र स प्रतितिष्ठति तच्च को वेदेति ॥१.२.२५॥

**वामन-** अथ मुच्यमानानामितरेषां च विष्णुरेव प्रवेश्यत्वान्महाश्रय इत्याह- **यस्येति ॥** हरेः ब्रह्मक्षत्रे ब्रह्मवायू प्रळयावस्थायामद्यत्वात् ओदनो भवतः । मुक्तामुक्तत्वविशेषणात् द्वैविध्यज्ञापनार्थमुभे इति विशेषणम् । यस्य ओदनस्य मृत्युरहमुपसेचनमात्रं भवामि । क एवेत्थं मुक्तामुक्तनियामकं विष्णुं वेद । क इति काक्वाक्षेपः । अथवा ब्रह्मा वायुर्वा कशब्दितः । यत्र सः यस्मिन् स भगवान् विशेषेण स्थितः । एवं तावत् ब्रह्म च क्षत्रं चेति चशब्दात् चराचरं सर्वमप्यन्नमस्येत्युक्तं भवति ॥ १.२.२५ ॥

**वादि-** "यस्य ब्रह्म च क्षत्रञ्च" इत्यत्र ब्रह्म ब्राह्मणजातिः । क्षत्रं क्षत्रियजातिः । उपलक्षणं चैतत् । देवर्षिपितृगन्धर्वमनुष्यपशुपक्ष्यादि-नानाजातिविशिष्टः जीवसमुदाय इत्यपि ग्राह्यम् । सर्वमारकमृत्योरास्वादने प्रीतिविशेषो भवतीत्यतः मृत्योः पृथग्ग्रहणम् ॥ १.२.२५ ॥

**वे.खं-** भगवतः सर्वसंहारकत्वरूपं माहात्म्यं वदंस्तस्य दुर्ज्ञेयत्वमाह- **यस्येति ॥** यस्य भगवतो ब्रह्म च क्षत्रञ्च इत्युभे ओदनः अशने भवतः तत्र

---

१. रुद्रं प्रजापतिञ्चैव ग्रसत्येको जनार्दनः ।
नान्योऽस्ति विष्णोः संहर्ता नियन्ता रक्षकस्सदा ॥ भारद्वाजसंहिता.२.८.११॥

ब्रह्मशब्देन ब्राह्मणजात्यभिमानी स्वयं ब्राह्मणश्चतुर्मुखाख्यो ग्राह्यः क्षत्रशब्देन क्षत्रजात्यभिमानी स्वयं क्षत्रियो वायुः यथोक्तं ''विष्णोर्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः'' (बृ.भा.३.५.५) इत्यादि। मृत्युर्मारणात् मृत्युनामा रुद्रः। ''मृत्युनामा तु संहाराद्रुद्रः'' इति वचनात्। यस्य भगवत उपसेचनं व्यञ्जनं धृतं वा तं भगवन्तं इत्था उक्तप्रकारेण को वेद ? न कोऽपि। यत्र वैकुण्ठादौ स तिष्ठति तच्च को वेदेति योजना। यद्वा कश्चतुर्मुख एवेत्था वेदोक्तप्रकारेण तं वेद सोऽपि किं स्वसामर्थ्येन नेत्याह- **यत्र स इति** ॥ यत्र के ब्रह्मणि स परमात्मा तिष्ठति नियामकतया स इत्यन्वयः। एवञ्च स्वान्तर्गतभगवत्प्रसादादेव वेदेति लभ्यते। यद्वा क इति किंशब्दो यच्छब्दार्थः। य इत्था वेद स यत्र स भगवान् यत्र तिष्ठति तत्र तिष्ठतीत्यर्थः ॥ १.२.२५ ॥

**रा.खं-** पुनस्तन्महिमोक्तिपूर्वकं तज्ज्ञानं दुर्लभमित्याह- **यस्येति** ॥ यस्य भगवतः ब्रह्म ब्राह्मणत्वजात्याक्रान्तं वस्तु, क्षत्रं क्षत्रियत्वजात्याक्रान्तं च, इतरेतरसमुच्चये चशब्दौ, उभे ब्रह्मक्षत्रे ओदनः अन्नं भवतः, यस्य ब्रह्मक्षत्राख्योदनवतः मृत्युः प्राणिनां मारकः उपसेचनं अद्यमानत्वे सत्यन्नादन-साधनम्, व्यञ्जनरूपमित्यर्थः, स एवं जगत्संहर्तृत्वगुणको महाबलः यत्र तिष्ठति इत्था इत्थं एवं प्रकारेण, तदिति शेषः, तस्यावस्थानं को वेद न कोऽपीति ॥ १.२.२५ ॥

**॥ इति प्रथमाध्यायस्य द्वितीया वल्ली ॥**

## अथ प्रथमाध्यायस्य तृतीया वल्ली

### उपनिषत्

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः ॥

### भाष्यम्

[१]आत्माऽन्तरात्मेति विभुरेक एव [२]द्विधा स्थितः ।
स विष्णुः परमे वायौ परेभ्योऽप्यृद्धरूपके ॥

शुभान् पिबति भोगान् स च्छायेव विदुषां प्रभुः ।
आतपः पापिनां नित्यं ..................॥ १.३.१ ॥

**व्यास**-'अध्यात्मयोगेन'' इति भगवतो ध्यानमुक्तम् । स कुत्र ध्येय इत्यत आह- **ऋतमिति** ॥ सुकृतस्य पुण्यस्य कार्ये शरीरे । पञ्चाग्नयो देवयजनादयो येषां ते तथोक्ताः ॥ १.३.१ ॥

**व्या.भा**- ''ऋतं पिबन्तौ'' इत्येतत्कैश्चिद्बुद्धिजीवपरत्वेन अन्यैर्जीवेश्वर-विषयत्वेन व्याख्यातम् । तन्न । सुखभोक्तृत्वानुपपत्तेः । सुखस्यैव भोक्तृत्वानुपपत्तेश्चेत्याशयवान् यथावद्व्याचष्टे- **आत्मेति** ॥ आत्मा देहहृदये स्थितः । अन्तरात्मा जीवहृदये स्थितः । आ ऋद्धः अर्द्धः परेभ्योऽप्यर्धः परार्धः तस्मिन् परेभ्योऽप्यृद्धरूपके परमे गुहां प्रविष्टे वायौ विभुर्विष्णुः स एक एवात्मान्तरात्मेति द्विधा स्थितः असौ । भुज्यन्त इति भोगाः विषयाः

---

१. एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः ।
एक एवोच्यते वेदैस्तावता नास्य भिन्नता ॥ (सू.भा.३.१.१८)

२. ....................द्वित्वं नैकस्य युज्यते ।
यस्सेतुरिति चैकत्ववचनेन विशेषणम् ॥ अनु.१.२.११ ॥

शुभानेव भोगान् पिबत्यनुभवति । ऋतं पिबन्तावुभावपि परमात्मानौ चेत्कथं छायातपत्वमित्यतस्तद्व्याचष्टे- **छायेति** ॥ १.३.१ ॥

**वामन-** अथेदानीमेतददन् किम्वन्वत्तीत्याकाङ्क्षायामाह– **ऋतं पिबन्ताविति** ॥ अत्र ऋतं शुभकर्मफलरसम् । तदेवायं पिबति नान्यत् । द्विवचनमेकस्यैव विष्णोर्द्वैरूप्येण द्विधावस्थानात् । अस्य खण्डस्याभिप्रायं ''आत्मा'' इत्यादिना पुराणवचनेन व्याख्याति । उभौ पिबन्तौ जीवपरौ किं न स्यातामित्यत आह– **''एक एव द्विधा स्थितः विष्णुः सः'' इति** ॥ सुकृतानामास्पदभूतमुख्यप्राणे द्विधा स्थित्वा तत्फलरसं पिबन्तौ ब्रह्म इति वदन्ति ब्रह्मविदः । विदुषां छायेव आह्लादकौ, पापिनामातप इव तापकौ । ये च त्रिःकृत्व आधेयत्वेन नचिकेतसे प्रोक्ताः पञ्चाग्नयः तांश्च ब्रह्मेति वदन्ति । गार्हपत्यादयस्त्रयः प्रणीताग्निराग्नीध्रश्चेति पञ्चाग्नयः । तेषु नियामकत्वेन स्थितपरमाग्नय एवात्रोदिताः । ''नाचिकेताग्निस्थो भगवानत्रोच्यते'' इति प्रागेव निगमनात् ॥ १.३.१ ॥

**वादि-** पञ्चाग्नयः देवयजनपितृयजनभूतयजनमनुष्ययजनब्रह्मयजनभेदेन पञ्च अग्नयो येषां ते तथोक्ताः । अग्न्यकर्मरूपत्वादेतत्पञ्चकमप्यग्निपदेनोच्यते । त्रिनाचिकेताः त्रिवारं कृतनाचिकेताख्याग्निपूजाः । सुकृतस्य कार्ये लोके शरीरे । परार्द्धे आ ऋद्धः आर्द्धः परेभ्यो रुद्रादिभ्योऽप्यतिशयितमहिम्नि परमे मुख्यप्राणे स्थित्वा गुहां प्रविष्टौ ऋतं पुण्यकर्मफलभूतं सुखं पिबन्तौ आत्माऽन्तरात्मेतिपदवाच्यौ भगवतो मूर्तिविशेषौ । जीवान्तर्याम्यन्तरात्मा, देहान्तर्याम्यात्मेति विवेकः । छायातपौ भक्तानां सन्तापहारित्वेन छायारूपौ, दैत्यानां सन्तापकारित्वेनाऽऽतपरूपौ च ब्रह्मविदो वदन्तीति योजना । सुकृतपदमहिम्ना ऋतमपि सुकृतरसभूतं पूज्यमेवेति लभ्यते । ''तस्येदाहुः पिप्पलं स्वाद्वग्रे'' (ऋ.सं.१.१६४.२२) इति श्रुतेः । अत एवास्वाद्वपि स्वादुत्वेन भुञ्जानो जीव इव भगवान्नाश्नुत इति भावेन

प्रागनश्नन्नित्युक्तम् । न तु सर्वथाऽशनाभावात् । "तस्येदाहुः पिप्पलम्" इत्युक्तत्वात् । एवञ्च "तयोरन्यः पिप्पलं स्वाद्वत्ति" इत्यत्राप्यस्वाद्वेव स्वादुत्वेनात्तीत्यर्थो ग्राह्यः ।। १.३.१ ।।

**वे.भा-** अध्यात्मयोगाधिगमेनेति भगवतो ध्यानमुक्तम् । स कुत्र ध्येय इत्यतस्तन्निरूपयन् पुनरपि भगवन्माहात्म्यमाह- **ऋतमित्यादिना ।।** केचित्तु "ऋतं पिबन्तौ" इत्यत्र बुद्धिजीवावुच्येते द्विवचनश्रुतेः । नच बुद्धौ कर्मफलभोक्तृत्वानुपपत्तिः । जीवस्य भोक्तृत्वेन तत्सहितबुद्धौ छत्रिन्यायेनोपचारोपपत्तेरित्याहुः । तदपरे न क्षमन्ते । अन्यतरस्य पातृत्वेन जीवत्वे सिद्धे द्वितीयस्य चेतनतयैव भाव्यत्वात् । "अस्य गोर्द्वितीयोऽन्वेष्टव्यः" इत्यादौ सजातीयग्रहणस्यैव लोके दर्शनात् । नचैवं जीवान्तरं ग्राह्यम् । एकस्मिन् शरीरे भोक्तृजीवद्वयायोगात् । तस्माज्जीवेश्वरावेवात्रोच्येते । नचेशस्य कर्मफलभोगायोगः । छत्रिन्यायेन पातृजीवसम्बन्धात्पिबन्तावित्युपचारादिति । तदसत् । पिबतोर्बुद्धिजीवत्वजीवेश्वरत्वयोर्हानिलाभादर्शनात् । पातृत्वस्य जीवनिष्ठत्वस्य तेनाप्यङ्गीकारात् । बुद्धाविवौपाचारिकत्वस्येश्वरे त्वयाप्यङ्गीकारात् । तस्मादयं मन्त्रः ईश्वरमात्रपर एव । तथासति द्विवचनानुपपत्तिरिति चेन्न । तस्य द्विरूपत्वाभिप्रायेण सावकाशत्वादिति भावेन मन्त्रं प्रमाणेनैव व्याचष्टे- **आत्मेति ।।** आत्मा देहहृदये स्थितः अन्तरात्मा जीवहृदये स्थित इत्याहुः । तत्त्वप्रकाशिकायां तु द्विरूपतया विष्णुर्देहनिविष्ट इत्युक्तम् । स्थितो हृदय इति शेषः । तेन गुहां प्रविष्टावित्येतद्व्याख्यातम् । परमे परार्ध इत्यस्य बाह्याकाशस्थानापेक्षया परमं परस्य ब्रह्मणः स्थानं परार्द्धं हार्दाकाशः । तत्र परब्रह्मोपलभ्यते । तस्मिन् परमे परार्धे हार्दाकाशे प्रविष्टाविति व्याख्यानमसत् । हार्दाकाशस्य परमत्वाभावात् । बाह्याकाशापेक्षयान्तराकाशस्य परमत्वे नियामकाभावात् । नच तत्र परब्रह्मोपलब्धिर्नियामिका । बाह्याकाशेऽपि योग्यानां परब्रह्मोपलब्धेः ।

"गुहां प्रविष्टौ" इत्यनेनैव हार्दाकाशस्थितिलाभाच्च । प्रमाणविरोधाच्चेति भावेन व्याचष्टे- **परम इति** ॥ सर्वजीवोत्तमे इत्यर्थः । परेभ्योऽपि रुद्रादिभ्यः ऋद्धरूपकेऽतिपरिपूर्णस्वरूप इत्यर्थः । स विभुर्विष्णुरेक एवात्मान्तरात्मेति द्विधा हृदये तत्रापि परमे परेभ्योऽपि ऋद्धरूपके वायौ स्थित इत्यन्वयः । विष्णुशब्दव्याख्यानम्- **विभुरिति** ॥ तथापि कथमयं मन्त्रः ईश्वरपरः । तस्य कर्मफलपातृत्वायोगादिति चेन्न । "रसं पिबति कर्मजम्' (सू.भा.१.२.११) इत्यादिवचने नश्वरस्यापि कर्मफलपातृत्वश्रवणात् । तथासति दुःखभोगो "अनश्नन्नन्योऽभिचाकशीति'(आ.उ.३.१.१) इत्यादिश्रुतिविरोधश्च स्यादित्यतः "ऋतं पिबन्तौ" इत्येतद्व्याचष्टे- **शुभानिति** ॥ सावधारणमेतत् । पिबति अनुभवति । भुज्यन्त इति भोगाः विषयाः । "ऋतं सत्यं तथा धर्मः'(गी.भा.७.९) इति स्मृतेः ऋतशब्दस्य धर्मवाचकत्वाच्छुभानित्युक्तम् । प्रत्युत जीवपक्ष एवेदमनुपपन्नम् । तस्याधर्मफलं प्रत्यपि भोक्तृत्वात् । नचापूर्णानन्दत्वप्रसङ्गः । अचिन्त्यैश्वर्यबलेन सुखभोगोपपत्तेः । अशुभभोगाभावविषयं तद्वाक्यमिति भावः । नन्वेवमस्येश्वरपरत्वे छायातपत्व-विरोधः । तयोर्विद्वदविद्वत्परत्वेन जीवेश्वरपरत्वावगमादित्यत आह- **छायेवेति** ॥ छायेव सुखकारणमित्यर्थः । आतप इत्यत्रापि इवशब्दोऽनुवर्तते । दुःखकारणमित्यर्थः । नचैवमौपचारिकत्वं दोषः । त्वन्मतेऽपि छायातपा-वित्यस्य विद्वद्वाचकत्वाभावेनामुख्यार्थस्य ग्राह्यत्वात् । नन्वेवं किं बलाद्विष्णु-मात्रपरत्वेन व्याख्यायत इति चेत् । गुहाप्रविष्टत्वलिङ्गादेव । तच्च विष्णुमात्रनिष्ठमित्युक्तम् ॥ १.३.१ ॥

**वे.खं-** सुकृतस्य लोके सुकृतनिर्मितशरीरे । गुहां हृदयगुहां प्रविष्टौ । तत्रापि परमे सर्वजीवोत्तमे परार्धे आ ऋद्धः अर्धः परेभ्योऽर्द्धः परार्धः । परेभ्योऽप्यृद्धरूपके अतिपरिपूर्णे वायौ प्रविष्टौ ऋतं सुकृतफलं पिबन्तौ भुञ्जानावात्मान्तरात्माख्यभगवद्रूपविशेषौ । ये पञ्चाग्नयः पञ्चमहायज्ञवन्तो

द्युपर्जन्यादिपञ्चाग्निविद्यानिष्ठा वा त्रिनाचिकेताः त्रिवारकृतनाचिकेताश्च ब्रह्मविदस्ते छायातपौ विद्वदविदुषोः सुखदुःखकारणीभूतौ वदन्ति ॥

॥१.३.१ ॥

**वरद-** ''ऋतं पिबन्तौ'' इत्यत्र जीवेश्वरौ प्रतिपाद्याविति व्याख्यानिरासाय व्याचष्टे- **आत्मेति** ॥ १.३.१ ॥

**वरद.खं-** अध्यात्मयोगाधिगमेत्युक्तोऽध्यात्मयोगो निरूप्यते- **ऋतं पिबन्तावित्यादिना ॥** यौ परमात्मानौ सुकृतस्य लोके शरीरे परमे उत्तमे परार्धे परेभ्योऽप्यासमन्तात् ऋद्धरूपे प्राणे हृदयगुहायां प्रविष्टौ वर्तेते । ब्रह्मविदो ब्रह्मज्ञानिनस्तावात्मानौ छायातपौ वदन्ति ॥ १.३.१ ॥

**रा.खं-** अध्यात्मयोगाधिगमेनेति भगवतो ध्यानमुक्तम् । स कुत्र ध्येय इत्यतोऽधिष्ठानमाह- **ऋतमिति ॥** यौ सुकृतस्य लोके पुण्यसम्बन्धिनि लोके पुण्यनिर्मितशरीरे हृदयगुहायां प्रविष्टौ तत्रापि परमे सर्वजीवोत्तमे परार्द्धे परमत्यन्तं, परेभ्य इति वा, आ समन्तात् ऋद्धे अभिवृद्धे ज्ञानादिपूर्णे मुख्यवायौ प्रविष्टौ ऋतं सुकृतफलं पिबन्तौ भुञ्जानौ आत्मान्तरात्माख्य-विष्णुरूपविशेषौ ब्रह्मविदः ब्रह्मज्ञानिनः पञ्चाग्नयः देवयज्ञपितृयज्ञभूतयज्ञ-मनुष्ययज्ञब्रह्मयज्ञरूपपञ्चमहायज्ञवन्तः ''द्युपर्जन्यपृथिवीपुंस्त्रीरूपपञ्चाग्नि-विद्यानिष्ठा वा'' त्रिनाचिकेताः त्रिवारकृतनाचिकेताग्नयः ये ते छायातपौ ''साध्वसाध्वोः'' छायातपाविव सुखदुःखौ वदन्तीति । तथा च सूत्रं ''गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्'' (ब्र.सू.१.२.१२) इति । हृदय-गुहास्थवायौ ध्येय इति भावः ॥ १.३.१ ॥

### उपनिषत्

**यः सेतुरीजानानामक्षरं ब्रह्म यत् परम् ।**
**अभयं तितीर्षतां पारं नाचिकेतं शकेमसि ॥ १.३.२ ॥**

भाष्यम्

.................. मर्यादा विष्णुयाजिनाम् ।
संसारस्य च पारस्थस्स विष्णुर्द्विस्वरूपकः ॥ १.३.२ ॥

**व्यास-** भगवद्ध्यानस्याहत्य साधनं किमित्यतो भगवन्तं स्तुवन् तद्वक्तुं शकुम इत्याह- **यस्सेतुरिति** ॥ सेतुत्वादिगुणकं ध्यातुं साधनं वक्तुं शकुम इत्यर्थः ॥ १.३.२ ॥

**व्या.भा-** "यः सेतुरीजानानाम्" इत्येतद्व्याचष्टे- **मर्यादेति** ॥ १.३.२ ॥

**टीका-** मर्यादा इत्यादिना यः सेतुः इत्यादेरभिप्रायमाह । अत्र एकवचनेन परब्रह्मत्वादिभिश्च विशेषणात् विष्णुरेव पिबन्ताविति भावः । संसारनदीं तितीर्षतां अभयं पारं विष्णवाख्यं ब्रह्म । एवं सङ्ग्रहेणोक्तं नाचिकेताग्निस्थं हरिं किञ्चिद्विस्तरेण च वक्तुं वयं तथा किञ्चित् शकुमः । नहि श्रोतुं शक्नोषीत्युपरम्यते ॥ १.३.२ ॥

**वादि-** ईजानानां "एजृ कम्पने" इति धातोः पापाद्भीतानां भक्तिनम्रतया विष्णुयाजिनां सेतुर्मर्यादा आधार इति यावत् । नाचिकेतं नाचिकेताग्निस्थं तं परमात्मानं शकेम वक्तुं शकुमः । त्वं सि असि, त्वं श्रोतुं शक्नोषीत्यर्थः । नेदमपूर्वम् । "तव वयं स्मः, त्वमस्माकमसि" इत्यैतरेयोपनिषदिस्थं प्रागुक्त्वा "तदप्येतदृषिणोक्तम्, त्वमस्माकं तव स्मसि" इति तदुत्तरवाक्येऽस्यार्थस्य स्पष्टीकृतत्वात् । अन्यथा शकेमेत्येतावतैव पूर्तेः सीति व्यर्थं स्यादिति ज्ञेयम् ॥ १.३.२ ॥

**वे.भा-** किञ्च "यस्सेतुः" इति पिबतोरेकवचनेन विशेषणादेक एव पाता । अत एव श्रुतौ द्विवचनप्रयोगेऽपि भाष्ये एकवचनप्रयोगः । स च याजकसेतुत्वादिविशेषणाच्च विष्णुरिति भावेन "यः सेतुरीजानानाम्" इति वाक्यं सर्वेषां याजिनामित्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **मर्यादेति** ॥ स

द्विस्वरूपको विष्णुर्विष्णुमुद्दिश्य याजिनां मर्यादा आश्रय इत्यर्थः । एतेन यत्परैरुक्तं यः सेतुरीजानानां तं नाचिकेतमग्निं यच्चाक्षरं परं ब्रह्माभयं पारं संसारपारं तीतिर्षतामाश्रयश्च तच्च शकेमसि परापरब्रह्मणी कर्मब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थ इति तदपि परास्तम् । यः सेतुरीजानानां यच्चाक्षरं परं ब्रह्म तं नाचिकेतमग्निं शकेमसीत्येकवाक्यत्वसम्भवे वाक्यभेदाश्रयणायोगात् । त्वत्पक्षे जीवेश्वरस्वरूपनिरूपणावसरेऽग्निस्वरूपनिरूपणस्यासङ्गतत्वाच्च । अपरब्रह्मभूताग्नेः कर्मविदाश्रयस्य ज्ञातव्यत्वस्य प्रागेवोक्तत्वाच्चेति । संसारपारं तितीर्षतामिति व्याख्यानमसत् । पारमित्यस्य पृथग्विशेषणत्वे गुणान्तरलाभात् । मुमुक्षूणां संसारपारमोक्षतितीर्षाया अभावाच्चेतिभावेन पारमित्येतत्सोपस्करं व्याचष्टे- **संसारस्येति** ॥ संसारस्य पारो मोक्षस्तस्मिंस्तिष्ठतीत्यर्थः ॥ १.३.२ ॥

**वे.खं-** यत्पूर्वं ''अनन्तलोकाप्तिम्'' इत्यादिना अग्निस्थभगवत्स्वरूपमुक्तं यच्च ''ओमित्येतत्'' इत्यादिना मुक्तनियामकभगवत्स्वरूपमुक्तं तदुभयमेकमेव तद्ध्याने चाहमेवाधिकारीत्याह- **यः सेतुरिति** ॥ यः पूर्वोक्तो द्विरूपको विष्णुरीजानानां विष्णुयाजिनां सेतुर्मर्यादा यच्च संसारभयं तितीर्षतामभयं अभयप्रदं पारं संसारस्थं मुक्तनियामकमितियावत् । अक्षरं परं ब्रह्म तं नाचिकेतमग्निं अग्निस्थं भगवन्तं शकेमसि ध्यातुं शक्ताः स्मः ॥ १.३.२ ॥

**वरद.खं-** तस्य महिमानमाह- **यस्सेतुरिति** ॥ ''नाचिकेतं शकेमसि'' इति नाचिकेताग्निस्थितं हरिं ज्ञातुं शक्तोऽस्मीत्यर्थः ॥१.३.२ ॥

**रा.खं-** धानस्याभ्यर्हितं प्रत्याहाररूपं साधनं ''विज्ञानसारथिः'' इत्यादिना विवक्षुः भगवन्तं स्तुवन् प्रतिजानीते-**यः सेतुरिति** ॥ ईजानानाम्, यजतेः कानच् सम्प्रसारणम्, विष्णुयाजिनां यः सेतुः मर्यादा तदक्षरं ब्रह्म परं उत्तमं तितीर्षतां संसारार्णवं तर्तुमिच्छतां अभयं पारं अभयप्रदं तीरम्, ध्यातुं नाचिकेतं नचिकेतसं प्रति साधनं वक्तुं शकेमसि शक्नुम इति योज्यम् । ''शक्लृ शक्तौ'' शब्विकरणं छान्दसम् । ''इदन्तो मसि''(सि.कौ.३५६८) इति मसिः ॥

उपनिषत्

**आत्मानं रथिनं विद्धि शरीरं रथमेव च ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ १.३.३ ॥**

**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ १.३.४ ॥**

**यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।**
**तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ १.३.५ ॥**

**यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।**
**तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ १.३.६ ॥**

**यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।**
**न स तत् पदमाप्नोति संसारं चाधिगच्छति ॥ १.३.७ ॥**

**यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।**
**स तु तत्पदमाप्नोति यस्माद् भूयो न जायते ॥ १.३.८ ॥**

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः ।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ १.३.९ ॥**

**व्यास-** अभ्यर्हितं प्रत्याहारं निरूपयति- **आत्मानमित्यादिना** ॥ प्रग्रहं दाम ॥ १.३.३ ॥

अश्वादीनां ग्रामादीनिव तेषु तेषां गोचरान्विषयानाहुः । आत्मा आत्मानम् ॥ १.३.४ ॥

सन्त्वात्मादयो रथ्यादिरूपाः । तथाच किमित्यत आह- **य इति** ॥ विज्ञानवान् बुद्धियुतः ॥ १.३.६ ॥

ध्यानस्य प्रत्याहारोऽभ्यर्हितं साधनं कुत इत्यतस्तद्रहितस्य तद्वतश्च क्रमेणानर्थफले आह- **यस्त्विन्त्यादिना** ॥ १.३.७-८ ॥

"स तु तत्पदम्" इति तच्छब्देनोक्तं किमित्यत आह- **विज्ञानेति** ॥

॥१.३.९ ॥

**वामन-** अथ यथाश्रुतस्य ध्यानप्रकारमपि सङ्ग्रहेण वक्तुमुपक्रमते– **आत्मानमिति** ॥ उपासकजीवो रथिवत् अध्यवसायगामी स्यादित्यर्थः ॥

॥१.३.३ ॥

स्वरूपभूतैरिन्द्रियैर्मनसा च ध्यानयोगे संस्थितं नित्यसुखभोक्तेत्याहुः ॥ ४ ॥

तस्य च योगस्यार्थे विशिष्टज्ञानादिनेन्द्रियाणां स्वावश्येन भाव्यम् । अविज्ञानवतो नित्याशुचेर्योगाभावात् तत् विष्णुपदं नाप्नोति ॥ १.३.५-७ ॥

यस्मात् यत्प्राप्तिनिमित्तात् भूयो न जायते ॥ १.३.८ ॥

एतदेव विशिनष्टि– **विज्ञानेति** ॥ विज्ञानसारथिः बुद्धिसारथिः । संसाराध्वनः पारं विष्णुपदम् ॥१.३.९॥

**वादि-** 'आत्मेन्द्रियमनोयुक्तम्" इत्यत्र आत्मेन्द्रियमनोभिः, "आत्मा देहे धृतौ यत्ने" इत्यनुशासनात् आत्मशब्दवाच्यरथभूतदेहेन इन्द्रियाख्याश्वैः प्रग्रहरूपमनसा च युक्तं रथिनं जीवं भोक्तारं विद्धीत्यर्थः । भवतु भोक्ता जीवः प्रकृते किमित्यतो मनोजयरहितानामकुशलतां मनोजयवतः कुशलतां मन्त्रद्वयेन प्राक् प्रदर्श्य पुनर्मन्त्रद्वयेन मनोजयरहितो ज्ञानी इन्द्रियजयशक्त्यभावा-दिन्द्रियलालसो भूत्वा संसार एव क्लिश्यते । परमात्मज्ञानबलेन मनोजयवांस्तु इन्द्रियाणि विषयेभ्य उपसंहृत्य परमात्मानं ध्यात्वाऽपुनरावृत्ति-स्थानमाप्नोतीति भावेन तयोरुभयोरपि योग्यं फलमाह-**यस्त्वित्यादिना** ॥ स तु तत्पदमाप्नोतीत्यत्र पदं विष्णुपदमेव, न तु रुद्रादिपदम् । मुक्तिश्च

विष्णुपदप्राप्तिरेव न तु तदैक्यमिति भावेनाऽह- **विज्ञानेति** ॥ ''भेजे खगेन्द्रध्वजपादमूलम्''(भाग.१.१८.१६) इति हि स्मृतिः । ''यस्माद्भूयो न जायते'' ''सोऽध्वनः पारमाप्नोति'' इति वदताऽयमेव परमो मोक्षो, न तु पुनरितोऽन्यः कोऽपि परमो मोक्षोऽस्तीति च सूचितः ॥ १.३.३-९ ॥

**वे.खं-** इन्द्रियनियमनमवश्यं सम्पाद्यमिति वक्तुं तदुपयुक्तत्वेन किञ्चिदुपदिशति- **आत्मानमिति** ॥ आत्मानं शरीरिणमेव रथिनं रथस्वामिनं विद्धि, शरीरं तु रथं विद्धि, अश्वस्थानीयैरिन्द्रियैर्विकृष्यमाणत्वात् । बुद्धिं तु सारथिं विद्धि शरीरप्रवर्तकत्वात्, बुद्ध्या विचार्य हि किञ्चित्करोति । मनः प्रग्रहमेव रशनामेव विद्धि । चशब्दस्तुशब्दार्थः । मनसा प्रगृहीतानां श्रोत्रादीनां प्रवर्तनात् ॥ १.३.३ ॥

इन्द्रियाणि हयानाहुः शरीराख्यरथाकर्षकत्वात् । तेषु तेषामिन्द्रियाणां गोचरान् शब्दादीन् विषयान् । अश्वसञ्चारदेशानाहुः तेष्विन्द्रियाणां सञ्चारात् । सन्त्वात्मादयो रथ्यादिरूपाः किं तत इत्यतो यथा सारथिशून्यो रथी दुःखभोक्तैवं बुद्धिशून्य आत्मापीत्याह- **आत्मेति** ॥ आत्मेति द्वितीयार्थे । आत्मानं शरीरिणं इन्द्रियमनोयुक्तं तन्मात्रयुक्तं बुद्धिशून्यं दुःखभोक्तेत्याहुर्मनीषिणः । यद्वात्र बुद्धिरपि ग्राह्या । तथाच प्रसिद्धरथिवत्सुखभोक्तेत्याहुः इति व्याख्येयम् ॥ १.३.४ ॥

इदानीमश्वस्थानीयेन्द्रियनियमनं कार्यमिति भावेन मनोनियमनं विज्ञानं च तत्साधनमित्यन्वयव्यतिरेकाभ्यामाह- **यस्त्विति** ॥ यस्तु अविज्ञानवान् । शास्त्रादिजनितविशेषबुद्ध्याख्यविवेकिसारथिशून्योऽत एवायुक्तेनानिगृहीतेन मनसा सदा युक्तो भवति तस्य पुरुषस्येन्द्रियाण्यवश्यानि भवन्ति । तत्र दृष्टान्तमाह- **दुष्टाश्वा इति** ॥ अनिगृहीताश्वा इत्यर्थः ॥ १.३.५ ॥

**वे.खं-** प्राधान्याद्व्यतिरेकमुक्त्वान्वयमाह- **यस्त्विति** ॥ १.३.६ ॥

**वे.खं-** अस्त्वेवमन्वयव्यतिरेकाभ्यां इन्द्रियनियमने मनोनियमनादि-साधनम् । तदेव किमर्थमिति चेन्न । तस्य परम्परया मोक्षोपयोगित्वादिति भावेनेन्द्रियनियमनाद्यभावे मोक्षाभावं तावदाह- **यस्त्विति** ॥ अमनस्कः अगृहीतमनस्कः । अत एवेन्द्रियाणां दुष्टविषयेषु यथेष्टं प्रवृत्त्या निरन्तरमशुचिः ॥ १.३.७ ॥

**वे.खं-** इदानीमन्वयमाह- **यस्त्विति** ॥ यस्मात् यत्पदं प्राप्य ॥ १.३.८ ॥

**वे.खं-** तदेव विवृणोति- **विज्ञानेति** ॥ अध्वनः संसाराध्वनः ॥१.३.९ ॥

**वरद.खं-** ''आत्मेन्द्रियमनोयुक्तम्'' इति इन्द्रियमनोयुक्तमात्मानं भोक्तेत्याहुरित्यर्थः ॥१.३.४ ॥

**वरद.खं-** योगैकदेशं प्रत्याहारं निरूपयति- **यस्त्वविज्ञानवानिति** ॥ अविज्ञानवत्त्वेनावशीकृतेन्द्रियस्य विज्ञानवत्त्वेन वशीकृतेन्द्रियस्य च किं फलं भवेदित्यतः तयोः क्रमेण फलमाह- **यस्त्वविज्ञानवान्भवति इत्यादिश्लोकद्वयेन** ॥ १.३.७-८ ॥

**वरद.खं-** तत्पदमाप्नोतीत्युक्तं पदं किमित्यत आह- **विज्ञानसारथिरिति** ॥ ॥ १.३.९ ॥

**रा.खं-** उपोद्घातं श्लोकद्वयेनाह- **आत्मानमिति** ॥ आत्मानं शरीरान्तर्व्यापिनं जीवमेव रथिनं विद्धि । शरीरं च रथं विद्धि जानीहि । प्रग्रहं रज्जुं मनस्त्वित्यन्वयः ॥ १.३.३ ॥

**रा.खं-** इन्द्रियाणि श्रोत्रादीनि हयानश्वानाहुः प्राज्ञाः । तेषु तेषाम्, व्यत्ययात्, हयरूपेन्द्रियाणां गोचरान् विषयभूतान् शब्दादीन् विषयान् अश्वसञ्चारानु- कूलदेशानाहुः इत्यर्थः । आत्मा आत्मानं इन्द्रियमनोभिर्युक्तं

भोक्तेति सुखदुःखानुभवकृतोच्चत्वनीचत्वभाजमाहुः, मनीषिणः ज्ञानिन इत्यर्थः ॥१.३.४॥

**रा.खं-** अश्वभूतेन्द्रियाणां प्रत्याहारः कस्य भवति, कस्य नेत्यतो रथित्वाद्युक्तेरुपयोगोक्तिपूर्वमाह- **यस्त्विति** ॥ यस्सदा अयुक्तेन अनिगृहीतेन मनसा अविज्ञानवान् विवेकहीनो भवति तस्येत्यादि व्यक्तम् ॥१.३.५॥

**रा.खं-** युक्तेन निगृहीतेन । विज्ञानवान् सारथिस्थानीयबुद्धिमान् । सारासार-विवेकवान् तस्येत्यादि व्यक्तम् ॥१.३.६॥

**रा.खं-** वशीकृतेन्द्रियत्वरूपप्रत्याहाराभावभावयोः को विशेषः ? येन स आवश्यक इत्यतः तदभावे तद्भावे च विशेषमाह- **यस्त्वित्यादिना मन्त्रद्वयेन** ॥ अविज्ञानवान् विवेकाख्यबुद्धिरूपसारथिहीनो भवति । अमनस्कः अवशीकृतमनस्कः ॥ **अशुचिरिति** ॥ विषयलम्पटत्वादिति भावः । इष्टाप्राप्त्यनिष्टप्राप्ती च आह- **न स इति** ॥ तत्पदं "सर्वे वेदाः" इत्युक्तं ब्रह्मस्वरूपम् ॥ १.३.७ ॥

**रा.खं-** विज्ञानवान् बुद्धिरूपसारथियुक्तः । समनस्कः वशीकृतमनस्कः ॥ **शुचिरिति** ॥ विषयालम्पटत्वादिति भावः । भूयः पुनरित्यर्थः ॥ १.३.८ ॥

**रा.खं-** एवं प्रत्याहाराभावभावयोः अनर्थप्राप्तीष्टप्राप्ती निरूप्य प्रत्याहाररूपं साधनं फलोक्त्या निर्धारयति- **विज्ञानेति** ॥ वशीकृतेन्द्रियवान् इत्यपि ज्ञेयम् । सारथिप्रग्रहवत्त्वोक्त्यैव वशीकृतेन्द्रियत्वं लब्धमिति तदनुक्तिः । अध्वनः संसारपदव्याः पारं तीरभूतं तद्विष्णोः परमं पदं स्वरूपमाप्नोतीति

॥१.३.९॥

उपनिषत्

[1]इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १.३.१० ॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ १.३.११ ॥

भाष्यम्

देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः ।
सोमवित्तपसूर्याप्पा अश्व्यग्नीन्द्रेन्द्रसूनवः ॥

यमो दक्षश्चेन्द्रियेशास्सुपर्णी वारुणी तथा ।
उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः ॥

मनोऽभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ॥

तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः ।
कश्चित्कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा ॥ १.३.१०-११

---

१. इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥३४०.२४॥
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः ॥
महतस्तु परमव्यक्तं त्वव्यक्तात्पुरुषः परः ॥ ३४०.२५॥
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥
एतत्परतरं गुह्यमेतदक्षरमुत्तमम् ॥३४०.२६॥
ओङ्कारवाचकं ह्येतद्गुणातीतं सनातनम् । अशब्दमरसस्पर्शमरूपं गन्धवर्जितम् ॥२७॥
निर्दुःखमसुखं ... तद्विष्णोः परमं पदम् ॥ विष्णुधर्मोत्तरपुराणम्, तृतीयः खण्डः ॥

**व्यास-** भगवद्ध्यानञ्च तारतम्यान्तर्गतत्वेन कार्यमित्याह- **इन्द्रियेभ्य इत्यादिना ॥**

**व्या.भा-** ''इन्द्रियेभ्यः परा:'' इत्यादिवाक्यं प्रसिद्धेन्द्रियपरत्वप्रतीतिं निवारयन् व्याचष्टे- **देवेभ्य इति ॥** के ते इन्द्रियदेवा इति जिज्ञासायामाह- **सोमेति ॥** श्रोत्रत्वक्चक्षूरसनघ्राणवाग्घस्तपादपायूपस्थानामिन्द्रियाणां क्रमात्सोमादयो देवा ईशा इत्यर्थः । अर्थदेवता आह- **सुपर्णीति ॥** ननु रूपादयः पञ्चार्थाः सौपर्ण्याद्यास्तु तिस्रः । अतः कथं तासामर्थविभाग इत्यत उक्तम्- **द्विद्व्येकदेवता इति ॥** द्वौ च द्वौ च एकश्च द्विद्व्येके तेषां देवताः द्विद्व्येकदेवताः । सुपर्णीवारुण्यौ द्वयोर्द्वयोरभिमानिन्यौ उमात्वेकस्येत्यर्थः । काष्ठा अवसानं परा गतिः परमप्राप्यम् । ''पुरुषान्न परम्'' इत्यादेस्तात्पर्यार्थमाह- **नैवेति ॥** १.३.१०-११ ॥

**वामन-** अथ तत्परिवारभूतानामिन्द्रियदेवतानां ध्यानमपि तत्तारतम्यानुसारेण कार्यमित्यभिप्रायेणाह– **इन्द्रियेभ्य इति ॥** एतद्वाक्याभिप्रायं ''देवेभ्यः'' इत्यादिना पुराणवाक्येन व्यक्तं व्याख्याति । सोमाद्याः श्रोत्राद्यभिमानिनः । इन्द्रसूनुर्यज्ञनामा जयन्त इति चोच्यते । अत्र श्रोत्रादीनां शब्दादयो वागादीनामभिजल्पादयश्चेति इन्द्रियविषया अपि दशैव भवन्ति । तेषामर्थानां सुपर्णी वारुण्युमा चेति तिस्रोऽभिमानिन्य उच्यन्ते । एवञ्चेदियतामिति विभागः कथमित्याकाङ्क्षायामाह- **तिस्रो द्विद्व्येकदेवता इति ॥** द्वयोरर्थयुग्मयोः एकार्थस्य चेति पञ्चार्थानां द्विर्भावेन दशार्थानां तिस्रो देवताः । इदमुक्तं भवति शब्दस्पर्शयोः सुपर्णी, रूपरसयोर्वारुणी, गन्धस्योमेति ज्ञानेन्द्रियविषयाणाम् । अथ कर्मेन्द्रियविषयाणामप्येवमेव । तथाहि अभिजल्पशिल्पयोः सुपर्णी, गतिविसर्गयोर्वारुणी, भोगस्योमेति । मनोऽभिमानिनो वीन्द्रादयस्तद्भर्तारस्ततः श्रेष्ठाः । तेभ्यो बुद्धिमानिन्यौ सरस्वती भारती च । ताभ्यां महादात्मानौ ब्रह्मवायू । ताभ्यामव्यक्तदेवता

रमा श्रेष्ठा । तस्याः पूर्णत्वात् पुरुषाख्यो विष्णुः, तस्मादुत्तमः कश्चिन्नास्ति । यद्यपि पुरुषशब्देन पूर्णत्वं सकृदुक्तम् । तथाऽपि काष्ठाशब्देन पुनस्तद्वचनमन्ययोगव्यवच्छेदाय । अतः स एव पूर्णो नान्यस्तत्सम इत्यर्थः । एवं समाधिकराहित्याद्विष्णुरेव जीवानामुत्तमगतिः ॥ १.३.१०–११ ॥

**वादि-** ''इन्द्रियेभ्यः परा ह्यर्थाः'' इत्यत्रेन्द्रियपदेन श्रोत्रादिदशेन्द्रियाभिमानिनः सोमादिदशदेवता गृह्यन्ते । अर्थपदेन साक्षाज्ज्ञानेन्द्रियविषयभूतरूपरसगन्धस्पर्शशब्दाभिमानिन्यः सुपर्णीवारुणीपार्वत्यख्याः तिस्रो देवता गृह्यन्ते । तत्र रूपरसयोः सुपर्णी, गन्धस्पर्शयोर्वारुणी, शब्दस्योमेति विवेकः । तदिदमुक्तं भाष्यकृता- **द्विद्व्येकदेवता इति** ॥ द्वयोरेका पुनर्द्वयोरेका- अवशिष्टस्यैकेत्यर्थः । सुपर्णीवारुण्योः प्राप्तनिजपदत्वाद्द्वयोर्द्वयोर्देवतात्वम् । उमायास्त्वप्राप्तनिजपदत्वादेकदेवतात्वमिति विवेकः ॥ १.३.१०- ११ ॥

**वे.भा-** ''इन्द्रियेभ्यः'' इति मन्त्रं जडानामेव तारतम्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **देवेभ्य इति** ॥ इन्द्रियात्मभ्यः इन्द्रियाभिमानिभ्य इत्यर्थः । अनेन श्रुताविन्द्रियार्थादिशब्दा अभिमान्यधिकरणन्यायेन तदभिमानिपरा इत्युक्तं भवति । के ते इन्द्रियाभिमानिनो देवा इत्यत आह- **सोमेति** ॥ दक्षश्चेत्येते दशेन्द्रियेशाः । तत्र श्रोत्रस्य सोमः, त्वचो वित्तपः, चक्षुषः सूर्यः, रसनस्याप्पः वरुणः, घ्राणस्याश्विनौ, वाचोऽग्निः, पाण्योरिन्द्रः, पादयोरिन्द्रसूनुर्जयन्तः, पाय्वोर्यमः, गुह्यस्य दक्ष इति विवेकः । श्रोत्राद्यभिमानिनो बहव इति अन्यत्रान्यथोक्तावप्यविरोधः । के ते अर्थाभिमानिनो येषामिन्द्रियदेवेभ्य उत्तमत्वमित्यत आह- **सु(सौ)- पर्णीति** ॥ ननु शब्दादयः पञ्चार्थाः सौपर्ण्याद्यास्तु तिस्रः । अतः कथं तासां तदभिमानित्वमित्यत आह- **द्विव्येकदेवता इति** ॥ द्वौ च द्वौ चैकश्च द्विव्येके द्विव्येकेषां देवता द्विव्येकदेवताः । सुपर्णीवारुण्यौ द्वयोर्द्वयोरभिमानिन्यौ, उमा त्वेकस्येत्यर्थः । तत्र सुपर्णीशब्दस्पर्शयोः, वारुणी रूपरसयोः, उमा

गन्धस्येति विवेकः । ''अर्थेभ्यश्च परं मनः'' इति वाक्यं व्याख्यातुं मनोऽभिमानिदेवता आह- **मनोऽभिमानिन इति** ॥ अपिरभिव्याप्तौ, इन्द्रकामादिव्यावृत्त्यर्थम् । तुशब्दोऽवधारणार्थः । इदानीं तद्वाक्यं व्याचष्टे- **ते इति** ॥ ''मनसस्तु परा बुद्धिः'' इति वाक्यं व्याचष्टे- **तेभ्य इति** ॥ मनोऽभिमानिभ्यः । लिङ्गवचनव्यत्ययेन श्रेष्ठेत्यनुवर्तते । ''बुद्धेरात्मा महान्'' इति वैयधिकरण्यप्रतीतिनिरासाय तद्व्याचष्टे- **तस्या इति** ॥ वायुरपि ग्राह्यः । महान् महत्तत्त्वाभिमानी । आत्मा सर्वजीवस्वामी । ''महतः परमव्यक्तम्'' इत्येतद्व्याचष्टे- **तत इति** ॥ ''अव्यक्तात्पुरुषः परः'' इत्येतद्वाक्यं व्याचष्टे- **तस्यास्त्विति** ॥ पुरुषशब्दप्रवृत्तिनिमित्तमाह- **पूर्णत्वादिति** ॥ पूर्णषड्गुणत्वादित्यर्थः । ''पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः'' इति पुरुषाच्छ्रेष्ठो नास्तीत्युक्तम् । तत्कैमुत्येन साधयति- **नैवेति** ॥ कुतश्चित्कुत्रापि देशे काले वा । ननु रमासमाभावेऽपि तदधिकवत् भगवदधिकोऽपि किन्न स्यादिति चेन्न । भगवत एव रमासमस्य सत्त्वात् । नहि तदधिकः तत्सदृशगुणवान्नेति युक्तम् । पुरुषादुत्तमस्य पाशुपतादिशास्त्रेषु कथनात् कथमेतदित्यत उक्तम्- **सा कथेति** ॥ किम्वित्यनुवर्त्तते । सा कथा श्रेष्ठोऽस्तीति कथा किमु कथमुपपन्ना, उक्तयुक्तिविरुद्धत्वादित्यर्थः ॥

॥१.३.१०-११ ॥

**वे.खं-** भगवज्ज्ञानं तारतम्यान्तगत्वेन सम्पाद्यमिति भावेन देवता-तारतम्यमाह- **इन्द्रियेभ्य इति** ॥ इन्द्रियेभ्यः श्रोत्रादीन्द्रियाद्यभिमानि-देवेभ्यः इन्द्रादिभ्योऽर्थाः अर्थाभिमानिन्यः देवताः सौपर्णी वारुण्युमा च परा उत्तमाः । अर्थेभ्यश्च परं मनः मनोऽभिमानिदेवता रुद्रादय उत्तमाः । मनसस्तु परा बुद्धिस्तदभिमानिनी सरस्वती । बुद्धेर्महानात्मा । महत्तत्त्वाभिमानी ब्रह्मा परः ॥१.३.१०॥

**वे.खं-** महतः परमव्यक्तं तदभिमानि श्रीतत्त्वम् । अव्यक्तात्पुरुषः पूर्णषड्गुणो भगवान् परः । पुरुषादप्युत्तममस्ति किमित्यत आह- **पुरुषान्न परमिति ॥** पुरुषात्किमपि परं न । यतः सा काष्ठा स एवावधिः । कुतः सा परागतिः गम्यत इति गतिः ॥ १.३.११ ॥

**वरद-** वशीकृतेन्द्रियाश्वस्य मनोनियमयुक्तस्य पुरुषस्य ध्यातव्यमुच्यते "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यादिना । तदभिप्रायं प्रमाणवचनेनैवाह- **देवेभ्य इति ॥** सोमः श्रोत्रस्य, वित्तपः स्पर्शस्य, सूर्यश्चक्षुषः, आपो रसनस्य, अश्विनौ घ्राणस्य, अग्निर्वाचः, इन्द्रः पाण्योः, इन्द्रसूनुः पादयोः, यमः पाय्वोः, दक्षो गुह्यस्य । द्वौ च द्वौ च एकश्च द्विद्व्येके तेषां देवता द्विद्व्येकदेवता इति विग्रहः । तत्र सुपर्णी शब्दस्पर्शयोरुभयोरभिमानिनी, वारुणी रूपरसयोः, उमा गन्धस्येति तद्विवेकः ॥ १.३.१०-११ ॥

**वरद.खं-** एवं प्रत्याहारं निरूप्य ध्यानार्थं ध्येयं वस्तु निरूपयति- **इन्द्रियेभ्य इति ॥** १.३.१० ॥

**रा.खं-** भगवद्ध्यानं च तारतम्यान्तगत्वेन कार्यमिति भावेन देवतातारतम्यमाह- **इन्द्रियेभ्य इति ॥** इन्द्रियेभ्यः श्रोत्रत्वक्चक्षूरसन-घ्राणवाक्पाणिपादपायूपस्थेभ्यः ज्ञानेन्द्रियकर्मेन्द्रियनियन्तृतया तत्तन्नामभ्यः क्रमात् तत्तदभिमानदेवेभ्यः सोमकुबेरसूर्यवरुणाश्व्यग्नीन्द्रजयन्तयमदक्षेभ्यः अर्थाः शब्दस्पर्शरूपरसगन्धरूपाः श्रोत्रादिविषयाः तदभिमानिन्यः सुपर्णी, वारुणी, पार्वतीति तिस्रो देव्यः परा उत्तमा इत्यर्थः । अभिमानिनयन्यायेन इन्द्रियादिशब्दानां अभिमानिषु मुख्यत्वात् । शब्दादीनां पञ्चत्वेऽपि सौपर्णीवारुण्यौ द्वयोर्द्वयोर्देवते, पार्वती त्वेकस्येति विवेकः । अर्थेभ्यः अर्थाभिमानिनीभ्यः तिसृभ्यो देवीभ्यः मनः मनोऽभिमानिनो रुद्रवीन्द्रशेषाः पराः । तेभ्यः बुद्धिः बुद्धितत्त्वाभिमानिनी सरस्वती परा । तस्याः महान् महत्तत्वाभिमानी आत्मा विरिञ्चः परः ॥ १.३.१० ॥

**रा.खं-** महतः चतुर्मुखात् अव्यक्तं प्रकृत्यभिमानिनी श्रीः परा । अव्यक्तात् श्रीतत्त्वात् पुरुषः पूर्णत्वहेतुना पुरुषनामा विष्णुः परः । पुरुषात् परं किञ्चिन्नास्ति । सा पुरुषः काष्ठा अवधिः देवतातारतम्यविश्रान्तिभूमिः । सेति विधेयापेक्षया स्त्रीलिङ्गोक्तिः । परा गतिः परमप्राप्यः ॥१.३.११॥

### उपनिषत्

**एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १.३.१२ ॥**

**व्यास-** सर्वगः कश्चिदस्ति चेत्कस्मात्स न दृश्यत इत्यत आह- **एष इति ॥** न दृश्यते चेदलं तद्दर्शनार्थं प्रयासेनेत्यत आह- **दृश्यत इति ॥** १.३.१२ ॥

**वामन-** एष आत्मा प्रकृत्या गूढः । अप्राकृतबुद्ध्या गृह्यते ॥१.३.१२॥

**वे.खं-** "सुकृतस्य लोके" इति भगवतः शरीरस्थत्वमुक्तम् । तर्हि जीववत्कुतो न दृश्यत इति चेन्न । किं सर्वेषां दर्शनमापाद्यते उत योग्यानामेव । आद्य आह- **एष इति ॥** द्वितीये त्वाह- **दृश्यत इति ॥** अग्र्यत्वमेव विशदयति- **सूक्ष्मयेति ॥** सूक्ष्मवस्तुविषयया ॥ १.३.१२ ॥

**वरद.खं-** पुरुषस्य माहात्म्यमाह- **एष इति ॥** य एष पुरुषशब्दोक्त आत्मा स सर्वेषु जीवेषु भूतनामकेषु वर्तते । तर्हि दृश्येतेत्यत आह- **गूढ इति ॥** परमात्मा न प्रकाशते चेदनिर्मोक्ष इत्यत आह- **दृश्यत इति ॥** १.३.१२ ॥

**रा.खं-** एवंविधः कश्चिदस्ति चेत् कुतो नोपलभ्यत इत्यत आह- **एष इति ॥** गूढोऽत्मा अन्तर्हितस्वरूपः सन् न प्रकाशते । तर्हि किं दर्शनार्थं प्रयत्नेनेत्यत उक्तम्- **दृश्यत इति ॥** तुः भगवत्प्रसादरूपहेतुद्योतकः । अग्र्यया श्रवणादिजनितया भगवत्प्रसादसध्रीचीनया सूक्ष्मया बुद्ध्या सूक्ष्मदर्शिभिर्दृश्यत इत्यर्थः ॥ १.३.१२ ॥

उपनिषत्

**यच्छेद् वाङ्मनसि प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति तद् यच्छेच्छान्त आत्मनि ॥१.३.१३॥**

भाष्यम्

**'तस्माद्वागात्मिका देवीरुमाद्यास्तु शिवादिषु ।**
**शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः ॥**

**तौ रमायां परानन्दे तां विष्णौ परमात्मनि ।**
**तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः ॥**

**कुतस्तु मानुषो देवान्नियच्छेद्विनियामकान्'' ॥ इति च**
**॥१.३. १३ ॥**

**व्यास-** इन्द्रियादिभ्योऽर्थादय उत्तमत्वेन ध्येया इत्युक्तम् । न केलमुत्तमत्वेन । किन्तु पूर्वपूर्वेषां उत्तरोत्तरनियतत्वञ्च ध्येयमित्याह- **यच्छेदिति ॥** इन्द्रियाणि वाचि नियच्छेत्, वाचं मनसि, मनश्च ज्ञाने बुद्धौ शान्ते अतिशयितसुखरूपे ॥ १.३.१३ ॥

**व्या.भा-** यच्छेदित्यादि व्यचष्टे- **तस्मादिति ॥** तस्मादुक्तप्रकारेण तारतम्याभावादिति । वागात्मिकाः वागभिमानिनीः । इन्द्रियाणि वाचि नियच्छेत् इत्यादौ ग्राह्यम् । इन्द्रियादीनामर्थादिषु नियमनं नाम किमित्यत आह- **तद्वशत्वेनेति ॥** नापरो नियमनरूपः । प्रसिद्धनियमनार्थत्वे बाधकमाह- **कुत इति ॥** १.३.१३ ॥

**वामन** ''यच्छेत्'' इत्युपदेशोपसंहारवाक्यं ''तस्मात्'' इत्यादिना व्याख्याति । यद्यपि वागिन्द्रियदेवताऽग्निरिति पुरस्तादुक्तम् । तथाऽप्यत्र वागात्मकत्वमुमादीनाम् । अविरुद्धं चेदम् । शब्दविवक्षया तदुक्तेः । एताः

शिवादिषु यच्छेत् । एतान् द्युदेवताद्वारेण ब्रह्मवाय्वोर्यच्छेत् । तावव्यक्तदेवताद्वारेण शान्ते सुखपूर्णे परमात्मनि यच्छेत् । नियम्यमानुषस्य नियन्तृदेवनियमनं कथमित्यत आह– **तद्वशत्वेनेति** ॥ विष्णुपरिवारतया वर्तमानानामुमादीनां शिवादिवशत्वेन ध्यानमेव हि तैर्नियम्यत्वमिति भावः ॥ ॥१.३.१३ ॥

**वादि-** ''यच्छेद्वाङ्मनसि'' इत्यत्र तद्यच्छेदिति नपुंसकैकवचनेन परामर्शादुभयोरपि यमधातुयोगाच्चेन्द्रियाणि वाचि यच्छेद्वाचं मनसि यच्छेदित्यर्थः । यच्छेदित्युक्तं स्वाधिकदेवतानियमनं कथं ध्यातुर्घटत इति चेन्न । नियमनं नाम तद्वशत्वेन ध्यानम्, न तु साक्षान्नियमनम् । तदुक्तं भाष्ये- **''तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः''** इति ॥ १.३.१३ ॥

**वे.भा-** ''यच्छेद्वाङ्मनसि प्राज्ञः'' इत्यादिकमपि प्रसिद्धजडवागादिपरमिति प्रतीतिनिरासाय प्रमाणेन व्याचष्टे- **तस्मादिति** ॥ उक्तरीत्या उमादीनां परस्परनियम्यनियामकभावसत्वादित्यर्थः । वागात्मिकाः वागभिमानिनीः शिवादिषु नियच्छेदित्यन्वयः । यद्यपि प्राक् वागभिमान्यग्निरुक्तः तथापि तस्य साक्षान्मनोऽभिमानिरुद्रादिनियम्यत्वाभावादुमाद्या गृहीताः । अनेन ''यच्छेद्वाङ्मनसि प्राज्ञः'' इत्येतद्व्याख्यातम् । शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेदित्यत्र सरस्वतीद्वारेति ग्राह्यम् । ''तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति'' इत्युक्तत्वात् । ''तद्यच्छेच्छान्त आत्मनि'' इति महदभिमानिब्रह्मवाय्वोः साक्षाद्भगवन्नियतत्वमुच्यते । तदयुक्तम् । ''महतः परमव्यक्तम्'' इत्युक्तत्वादित्यत आह- **तौ रमायामिति** ॥ परानन्द इति शान्तशब्दार्थः । आत्मशब्दार्थः परमात्मनीति । यच्छेदित्यनेन वागादीनां मनआदौ नियमनकर्तृत्वं जीवस्योच्यत इति प्रतीतिनिरासाय तस्य विवक्षितमर्थमाह- **तद्वशत्वेनेति** ॥ प्रतीत एवार्थः किन्न स्यादित्यत आह- **कुतस्त्विति** ॥ तत्र हेतुर्विनियामकानिति ॥ १.३.१३ ॥

**वे.खं-** इन्द्रियादिदेवेभ्य अर्थादिदेवा उत्तमत्वेन ध्येया इत्युक्तम् । न केवलमुत्तमत्वेन किन्तु पूर्वपूर्वेषां उत्तरोत्तरनियतत्वञ्च ध्येयमित्याह- **यच्छेदिति ॥** इन्द्रियाभिमानिदेवान् वाचि वागभिमानिदेवतासु उमादिषु यच्छेदिति ग्राह्यम् । वाक् वाचं वागभिमानिनीं मनसि मनोऽभिमानिनि रुद्रादौ यच्छेत् । तद्यच्छेत् तत् मनोऽभिमानिरुद्रादिकं ज्ञानआत्मनि ज्ञानाभिमानिन्यां सरस्वत्यां यच्छेत् । ज्ञानं ज्ञानाभिमानिनीं सरस्वतीं महत्यात्मनि महदभिमानिनि ब्रह्मवाय्वोर्नियच्छेत् । महान्तं चाव्यक्ते श्रीतत्त्वे नियच्छेत् । इति ग्राह्यम् । तत् अव्यक्तश्रीतत्त्वं शान्ते परमानन्दे आत्मनि परमात्मनि नियच्छेत् इत्यर्थः ॥ १.३.१३ ॥

**वरद-** एवं ध्यातव्यस्वरूपमुक्तम् । ततश्च किमित्यत उच्यते- **यच्छेद्वाङ्मनसि इत्यादि ॥** तस्यार्थः- **तस्माद्वागात्मिका देवी इत्यादि ॥** शिवादीन् ब्रह्मवाय्वोर्नियच्छेदिति विज्ञानद्वारा उपनिषदि ''तद्यच्छेत् ज्ञान आत्मनि'' इत्युक्तत्वात् । ननु देवानां नियमनं नाम किमित्यत आह- **तद्वशत्वेनेति ॥** किमर्थमेवम्? आज्ञाप्रधानमेव किं न स्यादित्यत आह- **कुत इति** ॥१३॥

**वरद.खं-** भवेदिन्द्रियादीनामेकैकस्मादेकैकस्योत्तमत्वं ततः किमित्यत आह- **यच्छेदिति ॥** वागिति प्रथमा द्वितीयार्थे । वागभिमानिनीं देवतां मनोऽभिमानिदेवे यच्छेत् अधीनत्वेन चिन्तयेदित्यर्थः ॥ १.३.१३ ॥

**रा.खं-** पूर्वत्र भगवतस्सर्वोत्तमत्वेन पूर्वपूर्वस्मादुत्तरोत्तरेषां उत्तमत्वेन च ध्यानं कार्यमिति भावेन तारतम्यमुक्तम् । न केवलं तावदेव । किन्तु पूर्वपूर्वेषां उत्तरोत्तरनियतत्वं च ध्येयमिति भावेनाऽऽह- **यच्छेदिति ॥** प्राज्ञः ज्ञानी इन्द्रियाभिमानिनः प्रागुक्तान् सोमादीन् वाचि वागभिमानिनीषु पार्वती-वारुणीसौपर्णीषु यच्छेदिति आदौ योज्यम् । नियमनं नाम तदधीनत्व-चिन्तनम् । तन्नियतान् चिन्तयेदित्यर्थः । एवमग्रेऽपि । वाङ्मनसीत्यत्र वाचं वागभिमानिनीः उमाद्यास्तिस्रो देवीः मनसि मनोऽभिमानिषु शिवशेषसुपर्णेषु यच्छेत् तन्नियतत्वेन ध्यायेत् । तत् मनो मनोऽभिमानिनः शिवशेषसुपर्णान्

त्रीन् ज्ञाने आत्मनि ज्ञानाभिमानिन्योः सरस्वतीभारत्योः यच्छेत् । ज्ञानं ज्ञानाभिमानिन्यौ सरस्वतीभारत्यौ महति महत्तत्त्वाभिमानिनोः आत्मनि आत्मशब्दोदितयोः विरिञ्चिवाय्वोः यच्छेत् । तत् महत्तत्त्वाभिमानिद्वयं शान्ते सुखरूपे आत्मनि परमात्मनि यच्छेत् । प्राज्ञ इति सर्वत्रानुषङ्गः । अत्र तद्यच्छेदव्यक्ते, तच्च शान्त आत्मनीति वक्तव्येऽपि अव्यक्ततत्त्वाभिमानिनः श्रीतत्त्वस्य स्वभर्तृनियतत्वं च सिद्धमेवेति नोक्तम् । अध्याहारो वा बोध्यः । तथा हि भाष्यं ''तौ रमायां परानन्दे तां विष्णौ परमात्मनि'' इति ॥१३॥

### उपनिषत्

**उत्तिष्ठत जाग्रत प्राप्य [1]वरान् निबोधत ।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं [2]पथः तत्**
**कवयो वदन्ति ॥१.३.१४॥**

**व्यास-** वेदपुरुषः स्वयं साधूनां हितमुपदिशति- **उत्तिष्ठतेति** ॥ किमर्थं बोधः सम्पादनीयः संसृतिनिवृत्त्यर्थमिति चेन्न । तस्याः कारणान्तरेणानायासेन निवृत्तौ प्रयाससाध्यबोधवैयर्थ्यादित्यत आह- **क्षुरस्येति** ॥ संसृतिः क्षुरस्य धारेव निशिता । निशितत्वमेव विवरीतुमुक्तम्- **दुरत्ययेति** ॥ तन्निवर्तकं पथश्चार्चिरादिमार्गाद्गम्यं दुर्गमिति कवयो वदन्ति ॥ १.३.१४ ॥

**वामन-** एवं तावन्नचिकेतसे प्रतिज्ञातं तत्त्वोपदेशमुपसंहृत्यान्यानपि सभ्यानुद्दिश्येदमाह– **उत्तिष्ठतेति** ॥ अहो महाजनाः, संसारशयनात् उत्तिष्ठत । अविद्यानिद्राया जाग्रत । यूयमपि मत्तोऽभीष्टवरान् प्राप्य तत्त्वं निबोधत । क्षुरस्य धारा निशिता पदविन्यासे दुरत्यया । अतः एतेन पथा यथा तद् गम्यं सुदुर्गममेवमेव तद् ब्रह्माख्यतत्त्वं सर्वप्रकारमार्गेणापि सुदुर्गं वदन्ति । तथाहि प्रमातृशक्त्या प्रमेयशक्त्या चाज्ञेयं गन्तृशक्त्या च दुष्प्रापम्, किन्तु तत्प्रसादादेव हि तत् सुज्ञेयं सुप्रापं चेत्यर्थः ॥ १.३.१४ ॥

---

१. ''परान्'' इति राघवेन्द्रस्वामिपाठः । २. ''पथःस्थम्'' इति वादिराजतीर्थपाठः ।

**वादि-** "उत्तिष्ठत जाग्रत" इत्यत्र अज्ञानाख्यनिद्रापर्यङ्कात् संसारात् शीघ्रमुत्तिष्ठत । जाग्रत अज्ञानाख्यस्वापं बहिष्कुरुत । सद्गुरुं प्राप्य वरान् पूर्वोक्तरीत्या क्रमेणोत्तरोत्तरश्रेष्ठान् देवान्निबोधत । ननु किमर्थमिदं ज्ञानं सम्पादनीयमित्यत उक्तम्- **क्षुरस्य धारेति ॥** क्षुरस्य धारा यथा स्वोपरि गच्छतः पदे पदे दुःखदात्री एवं संसृतिरपि क्षुत्तृट्त्रिकालगुणमारुतजैह्व-शैश्र्याद्युपद्रवैः जननमरणनरकयातनाद्युपद्रवैश्च पदे पदे दुःखदात्री । अतः क्षुरधारासदृशी । अत एव निशिता दुरत्यया । संसारोत्तारकज्ञानाख्योपायं विना तर्तुमशक्येत्यर्थः । पथस्थं पथः अर्चिरादिमार्गस्य स्थं अन्ते गम्यतया स्थितं कैवल्यपदं च दुर्गं कवयो वदन्ति । गुरुदेवताप्रसादं विना गन्तुमशक्यं कवयो वदन्तीति योजना ॥ १.३.१४ ॥

**वे.खं-** वेदपुरुषः स्वयं साधूनां हितमुपदिशति- **उत्तिष्ठतेति** ॥ हे अधिकारिणः संसार एव निषण्णा यूयमुत्तिष्ठत अविद्यासुप्ताश्च जागृत कथं जागरणं वरान् उत्तमाचार्यान्प्राप्य निबोधत । भगवत्स्वरूपमिति शेषः । किमर्थं भगवद्बोधः सम्पादनीयः संसारनिवृत्तेः कारणान्तरेणापि सम्भवादित्यत आह- **क्षुरस्येति** ॥ इयं संसृतिः क्षुरस्य धारेव निशिता अत एव दुरत्यया ज्ञानं विना अत्येतुमशक्या । तत् तस्मात् पथः पन्थानं मोक्षमार्गं दुर्गं ज्ञानं विना गन्तुमशक्यमिति कवयो वदन्ति । भगवज्ज्ञानस्यापि प्रत्यक्षादिनापि सम्भवात्किमाचार्योपदेशेनेत्यत आह- **दुर्गमिति** ॥ तं पन्थानं सुखहेतुप्राप्तिमन्तम् । "तत्प्राप्तेः सुखहेतुत्वात्पन्था इति हरिः स्मृतः"(बृ.भा.शा.ब्रा.) इति वचनात् दुर्गं आचार्योपदेशमन्तरेण ज्ञातुमशक्यमिति कवयो वदन्ति ॥ १.३.१४ ॥

**वरद.खं-** वेदपुरुषः प्राणिनां हितमुपदिशति- **उत्तिष्ठेति** ॥ परान्पुरुषान्प्राप्य किमर्थं बोध आपादनीय इत्यत आह- **क्षुरस्येति** ॥ संसाराख्यक्षुरस्य धारा निशिता ज्ञानमन्तरेण दुरत्यया अत्येतुमशक्या तत्पथः तं पन्थानं कवयो दुर्गं वदन्ति । येन मार्गेण प्रकारेण भगवान्प्राप्यते तं मार्गं दुरधिगमं वदन्तीत्यर्थः ॥ १.३.१४ ॥

**रा.खं-** एवं यमनचिकेतसोः संवादमियता ग्रन्थेनानूद्य वेदपुरुषः स्वयं साधूनां हितमुपदिशति- **उत्तिष्ठतेति** ॥ हे साधवः, उत्तिष्ठत नानाविध-विषयचिन्तनान्निवृत्ता भवत । जाग्रत जागृत आलस्यं मुञ्चत । प्राप्य वरान् महद्भ्यो वरान् प्राप्य, परानिति पाठे महतः प्राप्य, भगवन्तं निबोधत नितरां बुद्ध्यध्वम्, शब्विकिरणं परस्मैपदं छान्दसम् । कुतोऽयं भगवद्बोधः सम्पाद्यः ? बन्धनिवृत्तेः भगवद्बोधादन्येनापि सम्भवादित्यत आह- **क्षुरस्येति** ॥ संसृतिरिति शेषः । संसृतिः क्षुरस्य केशनिकृन्तनसाधनस्य धारा धारेव निशिताऽतितीक्ष्णा बहुशः दुःखकारिणी दुरत्यया दुःखेन अत्येतव्या तर्तव्या, भगवद्बोधादन्येन अत्येतुमशक्येति यावत् । अस्त्वेवं संसृतिर्भगवद्बोधनिवर्त्या । भगवज्ज्ञानार्थं उत्थानादिकं कुतः ? तत्सुलभोपायान्तरेणापि स्यादित्यत आह- **दुर्गमिति** ॥ तत्=संसृतिनिवर्तकं ब्रह्म पथः=श्रवणमननध्यान-रूपाद्वैराग्यभक्त्याद्यङ्गसहितान्मार्गात् दुर्गं=अतिक्लेशेन ज्ञेयम् । तथा अर्चिरादिरूपादत्यायाससम्पाद्यान्मार्गात् दुर्गं अतियत्नेन गम्यं प्राप्यं चेति कवयो ज्ञानिनो वदन्ति । न च तस्य ज्ञानप्राप्ती सुलभोपायसाध्ये । न च तज्ज्ञानप्राप्ती विना निश्शेषबन्धनिवृत्तिर्भवति । अत उत्तिष्ठत जाग्रतेत्याद्युक्तिर्युक्तेति ॥ १.३.१४ ॥

उपनिषत्

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यम-**
**गन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं**
**निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १.३.१५ ॥**

भाष्यम्

**स्वभार्यायाः परत्वं सिद्धमिति महतः परमित्येवोक्तम् ॥ १.३.१५ ॥**

॥ इति काठकभाष्ये प्रथमाध्यायस्य तृतीया वल्ली ॥

**व्या-** दुर्गमत्वं ब्रह्मणः कथमित्यतः शब्दाद्यनात्मकत्वेन श्रोत्राद्य-विषयत्वादित्याह- **अशब्दमिति** ॥ संसारनिवृत्तिसाधनं तज्ज्ञानं केन साधनीयमित्यत आह- **अनादीति** ॥ श्रोत्राद्यगोचरमपि महतः परत्वादिरूपेण शास्त्रतो निचाय्य ज्ञात्वा मृत्युमुखात्प्रमुच्यते ॥ १.३.१५ ॥

**व्या.भा-** अनाद्यनन्तमव्यक्तात्परमिति वक्तव्ये महतः परमित्युक्तेः कारणमाह- **स्वेति** ॥

**वामन -** अप्राकृतरूपत्वादेव प्राकृतेन्द्रियैरगम्यं तद् भवति । तथाऽपि भक्तिपूर्वकसेवया प्रसन्नः प्रकाशते । तज्ज्ञानेन जीवस्य न किञ्चित् प्रयोजनमित्याशङ्क्याह– **अनाद्यनन्तमिति** ॥ अत्र परमपुरुषस्य विष्णोः अव्यक्ताभिधाया रमायाः परत्वं स्वतः सिद्धमिति महतः परमित्येतावदेवोक्तम् । नतु मुख्यतस्तदभावात् ॥ १.३.१५ ॥

**वे.भा-** "अनाद्यनन्तं महतः परम्" इति वाक्येऽव्यक्तमेव प्रतिपाद्यते । महत्परत्वलिङ्गात् । "महान्तं च समावृत्य प्रधानं समवस्थितम्" इति वचनात् । "महतः परमव्यक्तम्" इति अव्यक्तस्यैव महतः परत्वेन प्रकृतत्वाच्चेति कश्चित् । तदसत् । तस्य मोक्षार्थं ज्ञेयत्वानुपपत्तेः । "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति वचनात् । अस्य विष्णुप्रकरणत्वाच्च । अत्रोक्तरीत्या पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां त्रयाणामेव प्रश्नेन तत्स्व-रूपस्यैवोपन्यासादव्यक्तकथनस्यासङ्गतत्वाच्च । तस्मात्प्राज्ञः परमात्मा हि तत्रोच्यते । नच महतः परत्वलिङ्गानुपपत्तिः । "महतो महीयान्" इति श्रुतेः । सर्वस्मात्परस्य महत्परत्वस्याप्युक्तत्वात् तर्ह्यव्यक्तपरत्वेन प्रकृते परमात्मनि विशिष्य महतः परत्वं कथमुच्यते । तथोक्तौ विशेषकारणाभावादित्यत आह- **स्वभार्याया इति** ॥ १.३.१५ ॥

**वे.खं-** कुतः शब्दाद्यनात्मकत्वेन श्रोत्राद्यविषयत्वादित्याह- **अशब्दमिति ॥** यद्वा दुर्गमत्वमुपपादयितुं तस्येतरवैलक्षण्यं वदन्नाचार्योपदेशेन भगवन्निश्चय एव मोक्षसाधनमित्याह- **अशब्दमिति ॥** शब्दो न भवतीत्यशब्दमित्यादिना पञ्चतन्मात्रावैलक्षण्यमुच्यते । अगन्धमित्यपि ग्राह्यम् । अगन्धमित्यनेनोपलक्षणया पञ्चमहाभूतवैलक्षण्यम् । तत्र हेतुरव्ययमिति । यद्वा न विद्यते शब्दो यस्य तदशब्दमित्यादिना शब्दादिगुणशून्यत्वमुच्यते । अशब्दमिति शब्दाविषयत्वञ्च । यच्छब्दस्य तमित्युत्तरेणान्वयः । न विद्यते आदिरुत्पत्तिः पराधीनप्राप्त्यादिलक्षणा यस्य सोऽनादिः । न विद्यतेऽन्तः परिच्छेदो देशतः कालतो गुणतो वा यस्य सोऽनन्तः । अनादिश्चासावनन्तश्च अनाद्यनन्तः तं महतश्चतुर्मुखात्परं तं विष्णुं निचाय्याचार्योपदेशेन निश्चित्य मृत्युमुखात्प्रमुच्यते ॥ १.३.१५ ॥

**वरद-** ''अनाद्यनन्तं महतः परं धृवम्'' इत्यत्राव्यक्तादपि परत्वं भगवतो वक्तव्यं तत्किमिति नोक्तमित्यत आह- **स्वभार्याया इति ॥** १.३.१५ ॥

**वरद.खं-** परमेश्वरप्राप्तिमार्गस्य दुर्गमत्वे कथं तज्ज्ञानेन मोक्षः स्यादित्यत आह- **अशब्दमिति ॥** शब्दो न भवतीत्यशब्दम् । एवमस्पर्शमरूपमरसमित्यादावपि द्रष्टव्यम् । अनेन शब्दादिभ्यो भेद उक्तः । अथवा न विद्यन्ते शब्दस्पर्शरूपरसा यस्य तदशब्दास्पर्शारूपारसशब्देनोच्यते- **अगन्धवदिति ॥** यद्गन्धसमवायि पृथिव्याख्यं वस्तु तन्न भवतीत्यर्थः । अनेन पञ्चभूतेभ्यो भेद उक्तः । तेषां शब्दादिगुणवत्वात् **॥ निचाय्येति ॥** शास्त्रमुखतो निश्चित्येत्यर्थः ॥ १.३.१५ ॥

**रा.खं-** कुतो ब्रह्मणो दुर्गमत्वमित्यतः तस्य श्रोत्राद्यविषयत्वादित्याह- **अशब्दमिति ॥** तद् ब्रह्म अशब्दं शब्दगुणहीनम्, इत्थमिति शब्दावेद्यं च । अत्याश्चर्यवस्तुत्वात् । अस्पर्शं स्पर्शगुणहीनम् । अत एव त्वग्विषयत्वहीनम् ।

अरूपमत एव चक्षुर्गोचरत्वहीनम् । भौतिकरूपराहित्यादेवाव्ययं नाशहीनम् । "रूपादिमत्त्वाच्च विपर्ययो दर्शनात्" (ब्र.सू.२-२-१५) इति सूत्रे भौतिकरूपादिमत एवानित्यत्वोक्तेः । तथाऽरसं रसगुणवर्जितं च, अत एव रसनेन्द्रियाविषयः । अगन्धवत् नित्यं गन्धवन्न । अत एव घ्राणाविषयश्च । बन्धनिवर्तकं तज्ज्ञानं केन मार्गेण भवतीत्यतो दुर्गं पथ इत्युक्तमाह- **अनादीति ॥** अनाद्यनन्तं आद्यन्तवर्जितम् । महतो महत्तत्वाभिमानि-चतुर्मुखात् परम् । ध्रुवं शश्वदेकप्रकारं तं तारतम्यान्तगत्वेन प्रागुक्तं पुरुषं निचाय्य विचार्य श्रवणादिभिर्निश्चित्य तदपरोक्षजप्रसादद्वारा मृत्युमुखात् संसृतिबन्धात् प्रकर्षेण मुच्यते । शब्दाद्यवेद्योऽपि भगवान् सदाचार्यसहाय-लब्धश्रवणमननध्यानावृत्त्या प्रसन्नः स्वापरोक्षं दत्त्वा बन्धान्मोचयतीति भावः । तदाह सूत्रकारः "प्रकाशश्च कर्मण्यभ्यासात्" (ब्र.सू. ३.२.२६) इति । अत्र महतः परादव्यक्तात् परमिति वक्तव्येऽप्यव्यक्ताभिमानिन्याः स्वभार्यायाः श्रियःपरत्वं सिद्धमिति महतः परमित्येवोक्तम् । तेन महत्परत्वलिङ्गादव्यक्त-मेवात्र निचाय्यवाक्येन कथ्यत इति प्रत्युक्तम् । तदाह सूत्रे "वदतीति चेन्न प्राज्ञो हि" (ब्र.सू. २.४.५) इति ॥ १.३.१५ ॥

### उपनिषत्

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १.३.१६ ॥**

**व्यास-** अत्राध्यायस्य समाप्तत्वादुक्तविद्यां श्रुत्वा वक्तुः फलमाह- **नाचिकेतमिति** ॥१.३.१६ ॥

**वामन** - अस्य श्रवणादिकमप्यभीष्टफलप्रदमित्याह – **नाचिकेतमिति ॥** नाचिकेताग्निस्थभगवद्विषयं नचिकेतसा सुकृतं च । तत्त्वज्ञानी विरिञ्चलोके । तत्त्वदर्शी चेद् विष्णुलोके ॥ १.३.१६ ॥

**वे.खं-** वेदपुरुषः पूर्वोक्तां विद्यां स्तौति- **नाचिकेतमिति ॥** सनातनं अनादिकालत इत्थमेवागतम् । श्रुत्वा उक्त्वा चेति योज्यम् ॥ १.३.१६ ॥

**वरद.खं-** अध्यायसमाप्तौ विद्यायाः फलमाह- **नाचिकेतमिति** ॥१६॥

**रा.खं-** एवं वेदपुरुषः यमनचिकेतस्संवादमनूद्य साधुशिक्षां च कृत्वा एतद्विद्याप्रवचनश्रवणयोः फलोक्तिपूर्वकमुपसंहरति- **नाचिकेतमिति ॥** नचिकेतसः सम्बन्ध्युपाख्यानं तच्चरितप्रतिपादकग्रन्थसन्दर्भम् । सलोपः छान्दसः । व्यक्तो मन्त्रद्वयार्थः ॥ १.३.१६ ॥

उपनिषत्

**य इमं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १.३.१७ ॥**

**॥ इति प्रथमाध्यायस्य तृतीया वल्ली ॥**

**॥ इति काठकोपनिषदि प्रथमोऽध्यायः ॥**

**व्यास-** स्थानविशेषे कालविशेषे वा स्तोत्रवदेतद्विद्यापठितुरानन्त्यं किल फलम् । किमु श्रुत्वा व्याख्यातुरुक्तं फलमित्याह- **य इति** ॥१.३.१७ ॥

**टीका-** यः पुनरिमं भगवन्तं ब्राह्मणे उपदिशति तस्य पूर्वोक्तादप्यनन्तगुणं फलम् । अतो यथाशक्ति प्रयत्नेन प्रवचनध्यानाद्युपासनं कार्यमित्यभिप्रायः ॥

**वे.खं-** देशकालविशेषे स्तोत्रवदेतद्विद्यापठितुरानन्त्यं फलम् । किमु श्रुत्वा व्याख्यातुरुक्तं फलमिति भावेनाह- **य इति ॥** तत् श्रावणम् । श्राद्धं वा । सर्वाध्यायार्थावधारणार्था अध्यायान्ते द्विरुक्तिः ॥ १.३.१७ ॥

**रा.खं-** द्विरुक्तिरादरार्था, प्रोक्तसर्वावधारणार्था च ॥१.३.१७॥

॥ इति काठकोपनिषदि प्रथमोऽध्यायः ॥

# अथ द्वितीयोऽध्यायः

## उपनिषत्

पराश्चि खानि [१]व्यतृणात् स्वयम्भूः तस्मात्
पराक् पश्यति नान्तरात्मन् । कश्चिद् धीरः
प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥

## भाष्यम्

'तृणु कात्करणे'' इति धातुः ॥ २.१.१ ॥

**व्यास-** पुनरपि ब्रह्मविद्यां वक्तुमध्यायान्तरत्वेनाधिकारार्थं दुस्सम्पाद्यमपि वैराग्यमवश्यं सम्पाद्यमित्याह- **पराश्चीति** ॥ खानि इन्द्रियाणि । आत्मनोऽन्तर्न पश्यति । प्रत्यक् अन्तः ॥ २.१.१ ॥

**व्या.भा-** केवलनिर्माणार्थप्रतीतिं निवारयन् ''व्यतृणात्'' इत्येतद्धातु-व्याख्यानेन व्याचष्टे- **तृण्विति** ॥ तृणु धातुः कात्करणे कुत्सितकरणे वर्तते इति धातुः धातुव्याख्यानमित्यर्थः ॥ २.१.१ ॥

**वामन** - अथैवम्भूतस्य तत्त्वज्ञानस्य दौर्लभ्यं सहेतुकमुपपादयति – **पराश्चि इत्यादिना** ॥ स्वयम्भूः पराश्चि खानि व्यतृणत् । पराश्चि स्वरूपतो बहिष्ठानि बाह्यवृत्तीनि वा । खानि इन्द्रियाणि व्यतृणत् व्यनिन्दत् । तृणुधातोः तदर्थत्वोक्तेः । तस्मात् प्राकृतपदार्थानेव पुरुषस्तैरिन्द्रियैः पश्यति नतु परमात्मानम् । तदग्राहकत्वात् तेषाम् । बाह्यार्थेभ्य आवृत्तचक्षुर्भूत्वा तदन्तर्यामिणं कश्चिदेव पश्यति । सुदुर्लभस्तद्द्रष्टेत्यर्थः ॥ २.१.१ ॥

**वादि-** पूर्वाध्यायान्ते गुरूपदिष्टज्ञानेन तुष्टस्य हरेः प्रसादात् संसारोत्तारः कर्तव्य इत्युक्तम् । स्वहृदि स्थितपरमात्मनो दर्शने स्वमनआदीन्द्रियैरेवालम् ।

१. ''व्यतृणत्'' इति वामनपण्डिताचार्यपाठः ।

किं गुरुप्रसादेनेति शङ्कावारणाय द्वितीयाध्यायस्यादाविन्द्रियाणां बहिर्मुखतया कुत्सिततया च स्वयम्भुवा सृष्टत्वात्तद्वशीकरणाय गुरुप्रसाद आवश्यक इति भावेनाऽऽह- **पराञ्चि खानीति ॥** खानीन्द्रियाणि पराञ्चि बहिर्मुखानि व्यतृणात्कुत्सितानि चकार । तृणु कात्करण इति धातुः । कश्चिद्धीरः हर्यनुग्रहात् प्रत्यगात्मानमैक्षदिति योजना ॥ २.१.१ ॥

**वे.भा-** ब्रह्मविद्याधिकारवैराग्यनिरूपणपूर्वं ब्रह्मस्वरूपं प्रपञ्चेनाह अनेनाध्यानेन । "पराञ्चि खानि व्यतृणात्" इत्यत्र व्यतृणादित्यस्य हिंसितवान् हननं कृतवानिति व्याख्यानमसदिति भावेन धातुं पठति- **तृण्विति ॥** धातुर्धातुव्याख्यानमित्यर्थः । कात्करणं नाम कुत्सितत्वेन करणम् । तृणुधातोर्हननार्थत्वस्याश्रुतत्वादिति भावः ॥ २.१.१ ॥

**वे.खं-** स्वयम्भूः ब्रह्मा पराञ्चि पराङ्मुखानि विषयासक्तानि । लोकेन्द्रियस्वरूपकथनमेतत् । खानि इन्द्रियाणि व्यतृणात् कात्कृतवान् । विषयव्यावृत्तान्यकरोत् । तस्माद्विषयव्यावृत्तेन्द्रियत्वात् पराङ् न पश्यति । विषयासक्तो न भवति किन्त्वन्तरात्मनि पश्यति । अन्तरात्मन्येवासक्तो भवतीत्यर्थः । यत एवमतः कश्चिद्धीरः अमृतत्वं मोक्षमिच्छन् आवृत्तचक्षुः विषयव्यावृत्तेन्द्रियः सन् प्रत्यगात्मानमन्तरात्मानमैक्षत् अपश्यत् पश्येदित्यर्थः ॥ २.१.१ ॥

**वरद-** एवं प्रथमाध्याये विषयविरक्तिप्रतिपादनपूर्वकं ब्रह्मस्वरूपं निरूपितम् । अस्मिन्नध्याये विषयाभिलाषनिराकरणपूर्वकं परब्रह्मनिरूपण-विशेषः क्रियते- **पराञ्चि खानि व्यतृणादित्यादिना ॥** तत्र व्यतृणादिति पदस्याप्रसिद्धार्थत्वात् तज्ज्ञापनाय धातुं पठति- **तृणु कात्कार इति ॥** कात्कारो नाम कुत्सितत्वेन करणम् । इन्द्रियाणां पराङ्मुखत्वापादनेन कुत्सितं कर्माकरोदित्यर्थः । नहीन्द्रियाणां विषयाभिमुखत्वापादनलक्षणं सत्कर्म मोक्षविरोधित्वादिति ॥ २.१.१. ॥

# अथ द्वितीयोऽध्यायः

## उपनिषत्

**पराञ्चि खानि [१]व्यतृणात् स्वयम्भूः तस्मात्**
**पराक् पश्यति नान्तरात्मन् । कश्चिद् धीरः**
**प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥**

## भाष्यम्

**'तृणु कात्करणे'' इति धातुः ॥ २.१.१ ॥**

**व्यास-** पुनरपि ब्रह्मविद्यां वक्तुमध्यायान्तरत्वेनाधिकारार्थं दुस्सम्पाद्यमपि वैराग्यमवश्यं सम्पाद्यमित्याह- **पराञ्चीति** ॥ खानि इन्द्रियाणि । आत्मनोऽन्तर्न पश्यति । प्रत्यक् अन्तः ॥ २.१.१ ॥

**व्या.भा-** केवलनिर्माणार्थप्रतीतिं निवारयन् ''व्यतृणात्'' इत्येतद्धातु-व्याख्यानेन व्याचष्टे- **तृण्विति** ॥ तृणु धातुः कात्करणे कुत्सितकरणे वर्तते इति धातुः धातुव्याख्यानमित्यर्थः ॥ २.१.१ ॥

**वामन -** अथैवम्भूतस्य तत्त्वज्ञानस्य दौर्लभ्यं सहेतुकमुपपादयति – **पराञ्चि इत्यादिना** ॥ स्वयम्भूः पराञ्चि खानि व्यतृणत् । पराञ्चि स्वरूपतो बहिष्ठानि बाह्यवृत्तीनि वा । खानि इन्द्रियाणि व्यतृणत् व्यनिन्दत् । तृणुधातोः तदर्थत्वोक्तेः । तस्मात् प्राकृतपदार्थानेव पुरुषस्तैरिन्द्रियैः पश्यति नतु परमात्मानम् । तद्ग्राहकत्वात् तेषाम् । बाह्यार्थेभ्य आवृत्तचक्षुर्भूत्वा तदन्तर्यामिणं कश्चिदेव पश्यति । सुदुर्लभस्तद्द्रष्टेत्यर्थः ॥ २.१.१ ॥

**वादि-** पूर्वाध्यायान्ते गुरूपदिष्टज्ञानेन तुष्टस्य हरेः प्रसादात् संसारोत्तारः कर्तव्य इत्युक्तम् । स्वहृदि स्थितपरमात्मनो दर्शने स्वमनआदीन्द्रियैरेवालम् ।

---

१. ''व्यतृणत्'' इति वामनपण्डिताचार्यपाठः ।

किं गुरुप्रसादेनेति शङ्कावारणाय द्वितीयाध्यायस्यादाविन्द्रियाणां बहिर्मुखतया कुत्सिततया च स्वयम्भुवा सृष्टत्वात्तद्वशीकरणाय गुरुप्रसाद आवश्यक इति भावेनाऽऽह- **पराञ्चि खानीति ॥** खानीन्द्रियाणि पराञ्चि बहिर्मुखानि व्यतृणात्कुत्सितानि चकार । तृणु कात्करण इति धातुः । कश्चिद्धीरः हर्यनुग्रहात् प्रत्यगात्मानमैक्षदिति योजना ॥ २.१.१ ॥

**वे.भा-** ब्रह्मविद्याधिकारवैराग्यनिरूपणपूर्वं ब्रह्मस्वरूपं प्रपञ्चेनाह अनेनाध्यानेन । ''पराञ्चि खानि व्यतृणात्'' इत्यत्र व्यतृणादित्यस्य हिंसितवान् हननं कृतवानिति व्याख्यानमसदिति भावेन धातुं पठति- **तृण्विति ॥** धातुर्धातुव्याख्यानमित्यर्थः । कात्करणं नाम कुत्सितत्वेन करणम् । तृणुधातोर्हननार्थत्वस्याश्रुतत्वादिति भावः ॥ २.१.१ ॥

**वे.खं-** स्वयम्भूः ब्रह्मा पराञ्चि पराङ्मुखानि विषयासक्तानि । लोकेन्द्रियस्वरूपकथनमेतत् । खानि इन्द्रियाणि व्यतृणात् कात्कृतवान् । विषयव्यावृत्तान्यकरोत् । तस्माद्विषयव्यावृत्तेन्द्रियत्वात् पराङ् न पश्यति । विषयासक्तो न भवति किन्त्वन्तरात्मनि पश्यति । अन्तरात्मन्येवासक्तो भवतीत्यर्थः । यत एवमतः कश्चिद्धीरः अमृतत्वं मोक्षमिच्छन् आवृत्तचक्षुः विषयव्यावृत्तेन्द्रियः सन् प्रत्यगात्मानमन्तरात्मानमैक्षत् अपश्यत् पश्येदित्यर्थः ॥ २.१.१ ॥

**वरद-** एवं प्रथमाध्याये विषयविरक्तिप्रतिपादनपूर्वकं ब्रह्मस्वरूपं निरूपितम् । अस्मिन्नध्याये विषयाभिलाषनिराकरणपूर्वकं परब्रह्मनिरूपण-विशेषः क्रियते- **पराञ्चि खानि व्यतृणादित्यादिना ॥** तत्र व्यतृणादिति पदस्याप्रसिद्धार्थत्वात् तज्ज्ञापनाय धातुं पठति- **तृणु कात्कार इति ॥** कात्कारो नाम कुत्सितत्वेन करणम् । इन्द्रियाणां पराङ्मुखत्वापादनेन कुत्सितं कर्माकरोदित्यर्थः । नहीन्द्रियाणां विषयाभिमुखत्वापादनलक्षणं सत्कर्म मोक्षविरोधित्वादिति ॥ २.१.१. ॥

**रा.खं-** पुनरपि ब्रह्मविद्यां वक्तुं तदङ्गतया वैराग्यं दुःसम्पादमपि यत्नेन सम्पाद्यमिति भावेनाह- **पराञ्चीति ॥** स्वयमेव भवतीति स्वयम्भूः स्वतन्त्रो भगवान्, तत्पुत्रो ब्रह्मा वा। खानि इन्द्रियाणि पराञ्चि पराङ्मुखानि, अत एव व्यतृणात् कुत्सितान्यकरोत्, ''तृणु कात्करणे'' इति धातोः। तस्मात् कारणात् पराक् बाह्यान् विषयान् पश्यति जीवः। आत्मन् आत्मनः स्वस्य अन्तः न पश्यति। सदा बहिर्दृष्टिरेवाऽस्त इत्यर्थः। कश्चिद्धीरो ज्ञानी अमृतत्वं मुक्तिमिच्छन् आवृत्तचक्षुः, उपलक्षणमेतत्, विषयेभ्यः परावृत्तचक्षुरादिकरणः सन् प्रत्यगन्तः आत्मानं स्वान्तस्थं भगवन्तं ऐक्षत् ईक्षत इत्यर्थः। लडर्थे लङ्, परस्मैपदं छान्दसम् ॥ २.१.१ ॥

### उपनिषत्

**पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति**
**विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा**
**ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २.१.२ ॥**

**व्यास-** विषयव्यावृत्तचक्षुरादिमान्न सर्वथा मुमुक्षुर्विषयादिप्रमादी स्यादिति भावेन पूर्वश्लोकोक्तमेव विशदमाह- **पराच इति ॥** बाला इव बालाः अविवेकिनः। पाशं जनिमृती। अमृतत्वं मोक्षम् ॥ २.१.२ ॥

**वामन-** बाह्यार्थकामिनो बाला मृत्युपाशेन बद्ध्यन्ते। अथ धीरा भगवद्दृष्टिफलं अमृतत्वं ध्रुवं विदित्वा स्वर्गादिषु अध्रुवफलेषु प्रार्थनं न कुर्वन्ति। तादर्थ्ये सप्तमी। अध्रुवफलार्थं न प्रार्थयन्तीत्यर्थः ॥ २.१.२ ॥

**वादि-** ध्रुवमध्रुवेष्विह न प्रार्थयन्त इत्यत्राध्रुवेषु न विद्यते ध्रुवो मोक्षो यैस्तान्यध्रुवाणि काम्यकर्माणि तेषु ध्रुवं न प्रार्थयन्ते। निमित्तसप्तमी चेयम्। काम्यकर्माख्यकरणैः मोक्षं न प्रार्थयन्ते इति भावः ॥ २.१.२ ॥

**वे.खं-** न सर्वथा मुमुक्षुर्विषयप्रमादी स्यादिति भावेनोक्तमेव विवृणोति- **पराच इति ॥** यद्वा विषयव्यावृत्तेन्द्रियाणां फलकथनेन तदेव समर्थयते- **पराच इति ॥** बाला अविवेकिनः पराचो बहिष्ठान् कामाननुयन्ति । अतस्ते विततस्य सर्वदेशकालेषु विस्तृतव्यापारस्य मृत्योर्यमस्य पाशं मरणमिति यावत् । यन्ति यान्ति । अथ तस्मात् धीरा अमृतत्वं मोक्षं ध्रुवं नित्यं विदित्वा इहाध्रुवेषु विषयेषु न प्रार्थयन्ते ॥ २.१.२ ॥

**वरद.खं-** पराञ्चि खानि व्यतृणात् इति श्लोकार्थं तत्फलञ्च विवृणोति- **पराच इति ॥** ये बाला अज्ञानिपुरुषाः पराचः पराग्भूतान् बहिष्ठानिति यावत् । अनुयन्ति प्राप्नुवन्ति ते पुरुषा विततस्य विस्तृतस्य मृत्योः संसारस्य पाशं यन्ति । अथ ये धीराः पुरुषास्ते अमृतत्वं मोक्षं धृवं पुरुषार्थं विदित्वा । नित्यमिति यावत् । अधृवेषु पुरुषार्थेषु न प्रार्थयन्ते । ''हन्त त इदं प्रवक्ष्यामि'' इति वक्ष्यमाणं सार्धश्लोकत्रयमेतदनन्तरभावीति ज्ञातव्यम् । तथाचास्य श्लोकार्थस्यैवं पूर्वोक्तेनैव सङ्गतिः ॥ २.१.२ ॥

**रा.खं-** मुमुक्षुः सर्वथा न विषयप्रमादी स्यादिति भावेनाह- **पराच इति ॥** ये बालाः बाला इवाविवेकिनः पराचः बाह्यान् कामान् स्रक्चन्दनवनितादि-विषयान् अनुयन्ति अनुसृत्य तिष्ठन्ति, ते विततस्य बहुकालीनस्य मृत्योः अविद्याकामकर्मादिः पाशं बन्धं तत्कृतक्लेशं यन्ति प्राप्नुवन्ति । अथ तस्मादिह लोके धीरा विवेकिनः ध्रुवममृतत्वं मोक्षं विदित्वा ज्ञात्वा अध्रुवेषु वित्तादिषु विषये न प्रार्थयन्ते । तेन नचिकेतसः स्तुतिरर्थाद् गम्यते ॥ २.१.२ ॥

### उपनिषत्

**येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यते । एतद् वै**
**तत् ॥ २.१.३ ॥**

## भाष्यम्

**इदं गुह्यं ब्रह्म प्रवक्ष्यामि । यथा मरणं प्राप्य जीवो भवति तच्च प्रवक्ष्यामि जीवेश्वरभेदज्ञापनाय । यः कर्मफलभोक्ता सुप्त्यादिमान् स जीवः । यः प्रलयादिषु जीवेषु सुप्तेषु जागर्ति स विष्णुः परं ब्रह्मेत्यर्थः । न हि जीवस्य योन्यादिगमनं ब्रह्म । जीवाद्भेदेन ज्ञातं हि ब्रह्म यथावज्ज्ञातं भवति ॥**

**व्यास-** अविलम्बेन तत्त्वं निरूपयेति पुनः पृच्छति- **येनेति** ॥ येनैवैतेन संसारे रूपादीन् विजानाति, तदेतदत्र मोक्षेऽपि नियामकं परिशिष्यते किमिति प्रश्नवाक्यार्थः । यदेतन्नियामकं मोक्षेऽपि परिशिष्यते किमिति पृष्टं तदेतन्मोक्षेऽपि परिशिष्यते वै इति परिहारमाह- **एतद्वै तदिति** ॥ २.१.३ ॥

**व्या.भा-** ''हन्त त इदं प्रवक्ष्यामि'' इत्येतत्पूर्वत्र सम्बध्यत इत्याशयवान् आत्मा जीवो मरणं प्राप्य यथा यद्भवति तद्ब्रह्मेत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे- **इदमिति** ॥ जीवस्य मरणानन्तरं यद्भवति तच्च वक्ष्यामीति किमर्थमपृष्टार्थप्रतिज्ञा क्रियत इत्यत आह- **जीव इति** ॥ मुमुक्षोर्जीवेश्वर-वैलक्षण्यज्ञानमावश्यकम् । तज्ज्ञापनायापृष्टार्थप्रतिज्ञा कृतेत्यर्थः । जीवेश्वर-भेदज्ञापनाय प्रतिज्ञा चेदुत्तरत्र तयोर्वैधर्म्योक्तिः स्यादिति वदतः तटस्थस्योक्तं वैधर्म्यमित्याह- **य इति** ॥ यः कर्मफलभोक्तेति ''योनिमन्ये प्रपद्यन्ते'' इत्यस्यार्थः । ''य एषु सुप्तेषु'' इत्यस्यार्थः यः प्रलयादिष्विति । आत्मा मरणं प्राप्य यथा यद्भवति तद्ब्रह्मेति कस्मान्न स्यादित्यत आह- **नहीति** ॥ ननु जीवेश्वरभेदज्ञापनञ्च किमर्थम् । येन तत्प्रतिज्ञा सार्थकेत्यत आह- **जीवादिति** ॥ त्वया यथावद्ब्रह्म ज्ञातव्यमित्यादावुपस्कर्तव्यम् । अतः प्रतिज्ञा सार्थकेति वाक्यशेषः ॥२.१.३॥

**वामन** - अहो तर्हि ध्रुवफले प्रार्थनीयमुत्तमत्वं किं तदित्याकाङ्क्षायामाह– **येन रूपमिति** ॥ अत्रायं विशेषः रूपरसादिज्ञापकत्वम्, स्वप्नादिप्रदर्शकत्वम्, जीवादत्यन्तभिन्नत्वम्, सूर्यादिनियन्तृत्वम्, स्वकीयरूपगुणक्रियादिभिरभिन्नत्वम्, भूतभव्येशानत्वं चेत्याद्यनेकधर्मविशिष्टं विवक्षितफलदमिति प्रथमत उक्त्वा तदपि साक्षात् परमगुह्यं विष्ण्वाख्यं ब्रह्मैवेति धर्मिस्वरूपं पश्चादाह– **हन्त त इदं प्रवक्ष्यामीत्यादिना** ॥ भाष्यकारभट्टारकस्तु एतद्वाक्यं पाश्चात्यमपि प्रथमतो व्याख्याय धर्मविधिवाक्यानि पश्चाद् व्याख्याति, धर्मिग्रहणपुरस्सरं धर्मग्रहणं सुखव्युत्पादनाय स्यादिति । इदं गुह्यमित्यादेर्भाष्यस्यार्थः "य इमं परमं गुह्यम्" इति पूर्वप्रस्तुतो भगवानेव "हन्त त इदम्" इत्यत्र इदं ब्रह्म प्रकर्षेण वक्ष्यामीति प्रतिज्ञायते । सनातनं ध्रुवम् । तदेव ध्रुवफलं च । अयं जीवसङ्घो मरणममृतत्वं च ततः प्राप्य यत्प्रकारेण प्रवृत्तो भवति तत्प्रकारं च वक्ष्यामि । तदनुक्तौ जीवेश्वरभेदज्ञानासिद्धेः । तदसिद्धौ तज्ज्ञानस्य यथार्थत्वासिद्धेश्च । जीवेशयोः विरुद्धधर्मदर्शनात् स्वरूपभेदो निश्चेतव्य इत्याह– **य इति** ॥ योऽयं पारतन्त्र्येण सुखदुःखभोक्ता सुप्तिमोहादिमांश्च स जीवः ईशाद् भिन्नः । यः प्रळये प्रत्यहं च जीवेषु सुप्तेषु जागर्ति स विष्णुः । स एवं च परं ब्रह्म इति श्रुत्यभिप्रायः । नह्यत्यन्तविलक्षणयोरनयोरभेदसम्भवः । नन्वस्ति सालक्षण्यं जीवेशयोः यथाकर्मादिजननमित्यत आह– **नहीति** ॥ नहि जीवस्य योन्यादिगमनं ब्रह्मधर्मः । नापि नित्यजागरणं जीवधर्मः । अतो जीवाद् भेदेन ज्ञातमेव ब्रह्म यथावत् ज्ञातं भवति । अपरथा तज्ज्ञानस्य जीवज्ञानत्वप्रसङ्गात् । स च भेदः सव्येतरविषाणयोरिव न पृथक्त्वमात्रम् । किन्तु नियम्यनियामकभावलक्षणत्वेन विलक्षणतयेत्याह– **येन रूपं रसं गन्धमित्यादिना** ॥ येन रूपरसादिकं जीवो विशेषेण जानाति शब्दस्पर्शादिकमपि एतेनैव विजानाति । किमत्र महति साम्पराये परिशिष्यत इति त्वत्प्रश्नस्येदमुत्तरम्, एतद् रूपादिज्ञापकं गुह्यं ब्रह्मैव तत् परिशिष्यमाणं हि ॥

**वादि-** अधुना यमेनोक्तं भगवतः सांसारिकजगन्नियामकत्वमनुवदन् प्रकृतप्रमेयं पृच्छति- **येनेति** ॥ येन एतेन जगत्स्रष्टृत्वेन्द्रियप्रेरकत्वादिना कथितेनैतेन प्रत्यगात्मनैव रूपरसादिकं पश्यति तदिदमीश्वराख्यं स्वतन्त्रतत्त्वं अत्र मुक्तजीवे नियामकतया परशिष्यते किमिति प्रश्नः । अतिगोप्यत्वादस्य प्रमेयस्य सङ्क्षेपेणैवोत्तरमाह- **एतद्वै तदिति** ॥ एतत् सांसारिकसकलजीव-प्रवर्तकतयोक्तं ब्रह्म, हेतुगर्भमिदं विशेषणम्, संसारे स्वनियम्यं जीवं मुक्तौ स्वतन्त्रं कर्तुं कथं प्रेक्षावानीश्वरो यतत इति भावः, तद्वै मुक्तनियामकतया मुक्तावपि परिशिष्यमाणम् । वा इत्यनेन ''उतामृतत्वस्येशानो यदन्नेनाति-रोहति'' (ऋ.सं.१०.९०.२) इति श्रुतिप्रसिद्धिं ''सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्'' (भाग.२.६.१७) इति स्मृतिप्रसिद्धिं च सूचयति । स्मृतिसमाख्यया श्रुतावन्नेनेति तृतीया द्वितीयार्थे । यद्यस्मात्कारणादन्न-मन्नोपजीविनं मर्त्यमतिरोहति संसारेऽतिक्रम्य वर्तते उत तस्मात् कारणात् अमृतत्वस्य मुक्तसमूहस्येशान इति श्रुतेरर्थः । संसारे जीवनियामको देवो मुक्तस्यापीशो भवेदेव । यथा प्रेक्षावान् राजा स्वभृत्यं कदाऽपि स्वसमं न कुरुते तथा संसारे सकलजीवेशो भगवानपि कथं मुक्तौ सत्यां तदीशानत्वं त्यजेदिति भावः ॥ २.१.३ ॥

**वे.भा-** मायावादिनो ह्यस्मिन्नध्याये जीवेशाभेद एव प्रतिपाद्यते । ''य इदं मध्वदं वेदात्मानं जीवम्'' इति सामानाधिकरण्यात् । ''यदेवेह तदमुत्र'' इत्यादेश्चेति वदन्ति । तदसत् ।

**'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा मरणं प्राप्यात्मा भवति गौतम ॥**

इत्युत्तरत्र जीवेशभेदस्यैवोक्तत्वेन तद्विरोधादिति भावेन तद्वाक्यमन्यथा-प्रतीतिनिरासाय व्याचष्टे- **इदमिति** ॥ ''स्वप्नान्तं च'' इत्यतः पूर्वं ''हन्त त इदं प्रवक्ष्यमि'' इति प्रतिज्ञावाक्यं द्रष्टव्यमिति भावेन तद्वाक्यव्याख्यानमत्र

क्रियत इत्यप्याहुः । जीवो मरणं प्राप्य यथा भवति तच्चेति सम्बन्धः । यद्यपि पूर्वं ''गुह्यं तत्परमं ब्रह्म म्रियमाणं शरीरिणम् । सम्प्राप्तमपि'' इति मरणशब्दं म्रियमाणपरमङ्गीकृत्यायं मन्त्रो भगवत्परतयैव व्याख्यातः । तथापि व्याख्यानान्तरमेतदित्यविरोधः । नन्विदं गुह्यं प्रवक्ष्यामीति प्रतिज्ञा असङ्गता । ब्रह्मस्वरूपस्य नचिकेतसाऽपृष्टत्वात् । जीवो मरणं प्राप्य यथा भवति तच्च प्रवक्ष्यामीति प्रतिज्ञात्वसङ्गतैव । नचिकेतसा जीवस्वरूपस्यापृष्टत्वादित्यत आह- **जीवेश्वरेति** ॥ जीवेश्वरभेदज्ञापनश्च जीवेश्वरस्वरूपकथनं विना न भवतीति भावः । ननु यद्यत्र जीवेश्वरभेदज्ञापनाय जीवेश्वरस्वरूपनिरूपणं प्रतिज्ञातं स्यात्तर्ह्युत्तरत्र विरुद्धधर्मवत्तया तदुभयोक्तिः स्यादित्यतोऽस्त्येव तथा तदुभयोक्तिः ।

**'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।**
**स्थाणुमन्येऽनु संयन्ति यथाकर्म यथाश्रुतम् ।**
**'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः ।**
**तदेव शुक्रं तद्ब्रह्म..................॥''**

इति जीवेश्वरयोस्तथोक्तत्वादिति भावेन तद्वाक्यं व्याचष्टे- **य इति** ॥ कर्मफलभोक्तेत्यनेन ''योनिमन्ये'' इत्यादिकं व्याख्यातम् । सुप्त्यादिमानित्यादिपदेन शोकमरणादिपरिग्रहः । जागर्तीत्यनन्तरं यः शोकराहित्याच्छुक्रः यश्च नित्यामृतो यश्च सर्वलोकाश्रयो यश्च कोऽपि नात्येतीति ग्राह्यम् । तेन सुप्त्यादीत्यादिपदोपपत्तिः । जीवेषु सुप्तेषु यो जागर्ति स विष्णुरिति न युक्तम् । देवदत्ते सुप्तेऽपि यज्ञदत्तस्य जागरणदर्शनेन तस्य विष्णुलिङ्गत्वासम्भावादित्यत उक्तं- **प्रलयादिष्विति** ॥ आदिपदेन सृष्टिस्थितिकालग्रहणम् । नन्वेतदयुक्तम् । तथासति ''कामं कामं निर्ममाणः'' इत्यस्यानुपपत्तिः । नच प्रलये निर्माणमस्ति । नच निर्माणमात्रमत्रोच्यते । नतु तत्कालीनमिति वाच्यम् । ''भुञ्जानो नोत्सृजेद्वाचम्'' इत्यादाविव प्रकरणप्राप्तत्वादित्युक्तत्वात् ।

अत एव सूत्रकारोऽपि ''निर्मातारं चैके'' इति स्वाप्नपदार्थनिर्मातृत्वमीश्वरस्यैतच्छ्रुत्यवष्टम्भेनोक्तवानिति चेन्न । प्रलयेऽपि ब्रह्मादिजीवमनोवृत्त्यादिनिर्माणस्य सत्वात् । कथमन्यथा तन्मनोवृत्तेः प्रवाहतोऽनादित्वम् । उक्तञ्च ''प्रलयेऽपि प्रतिभातपरावरः'' इति । उक्तञ्च तत्त्वप्रकाशिकायाम्- ''स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण'' इति । सूत्रकृतेश्वरस्य स्वाप्नपदार्थनिर्मातृत्वे एतच्छ्रुतेरुपपादनादत्र च भाष्ये प्रलयादिष्वित्युक्तत्वात्संस्कारादेः सत्त्वाच्च प्रलयेऽपि स्वाप्नपदार्थनिर्माणमस्तीत्यप्याहुः । ननु प्रलये यदि ब्रह्मादिमनोवृत्तिनिर्माणं तर्हि कथं तेषां सुप्तिः । नच ब्रह्मादिव्यतिरिक्तानामेव सुप्तिरिति वाच्यम् । ''सुषुप्तिसंस्थान् ब्रह्मादिकान्'' ''सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः'' इत्यन्यत्रोक्तेरिति चेन्न । यतस्तेषां सावस्था अस्मत्स्वप्नावस्थासदृशी । मनोवृत्तेस्सद्भावात् । बहिर्व्यापाराभावाच्च । एवञ्च स्वप्नसुषुप्त्युभयसाधारणसुप्तिशब्दस्य तत्र गौण्या वृत्त्या प्रयोग इति । उक्तञ्च बृहदारण्यकभाष्ये । ''स्वप्नसुषुप्त्युभयाभिप्रायेण कानि सुप्त इत्युक्तम्'' इति । उक्तञ्च षट्प्रश्नभाष्यटीकायाम् । ''स्वापोऽपि द्विविधः स्वप्नः सुषुप्तिश्चेति'' इति ।

ननु जीवः सुप्तिशोकादिमान् विष्णुस्तु तेषु सुप्तेषु जागर्ति शोकादिरहितश्चेत्यस्तु तयोर्भेदः, जीवस्य कर्मफलभोक्तृत्वेन कथं तयोर्भेदसिद्धिः । विष्णोरपि कर्मफलभोक्तृत्वाङ्गीकारादिति चेन्न, यतोऽत्र कर्मफलं श्रुत्युक्तं जीवस्य योन्यादिगमनमेव विवक्षितम् । नहि जीवस्य यद्योन्यादिगमनं तत् ब्रह्म प्राप्नोति । अतस्तयोर्भेदः सिद्ध इति भावेनाह- **नहीति ॥** प्राप्नोतीति शेषः । यद्यपि जीवनियामकतया योन्यादिगमनमपि प्राप्नोत्येव ब्रह्म तथापि न स्वकर्मार्जितशरीरप्राप्त्यर्थम् । अत एव श्रुतौ शरीरत्वायेत्युक्तमिति भावः । ननु ''हन्त त इदं प्रवक्ष्यामि'' इत्यत्रेदं गुह्यं ब्रह्म प्रवक्ष्यामि । यथा मरणं प्राप्य जीवो भवति तच्च प्रवक्ष्यामीति प्रतिज्ञाद्वयं कृत्वा तदुभयं पश्चादभिधीयत

इति कुतोऽङ्गीकर्तव्यम् । ब्रह्म प्रवक्ष्यामीति प्रतिज्ञाय पश्चात्तन्निरूपणमेव क्रियत इत्यर्थः किं न स्यात् । नचैवं "यथा मरणं प्राप्य" इत्येतद्व्यर्थं स्यादिति वाच्यम् । आत्मा मरणं प्राप्य यथा भवति तदिदं ब्रह्म प्रवक्ष्यामीति वाक्ययोजनोपपत्तेः । सम्भवत्येकवाक्यत्वे वाक्यभेदायोगाच्चेति चेन्न । तथासति "योनिमन्ये प्रपद्यन्ते" इत्यादिना जीवस्य योन्यादिगमन-मुच्यमानमसङ्गतं स्यात् । नच जीवस्य योन्यादिगमनमपि ब्रह्मतयोच्यत इति नासङ्गतिरिति युक्तमित्याह- **नहीति** ॥ योन्यादिगमनस्य ब्रह्मत्वे तस्यानित्यत्वप्रसङ्ग इत्यर्थ इत्यप्याहुः । नन्वेवं प्रतिज्ञाद्वयमित्यङ्गीकारे जीवस्वरूपकथनं व्यर्थम् । तस्याजिज्ञासितत्वात् । नच जीवेश्वरभेदज्ञापनाय तत्कथनमित्युक्तमिति वाच्यम् । जीवेश्वरभेदस्याप्यजिज्ञासितत्वेन तज्ज्ञापनस्यापि व्यर्थत्वादित्यत आह- **जीवादिति** ॥ ब्रह्मणो यथावज्ज्ञानं च नचिकेतसा प्रार्थितमिति भावः ॥२.१.३॥

**वे.खं-** एवमुक्तो नचिकेताः स्वयं विषयव्यावृत्तेन्द्रियत्वात् पुनरपि जीवनियामकभगवत्स्वरूपं पृच्छति- **येनेति** ॥ येन "सर्वे वेदाः" इत्याद्युक्तमाहात्म्यवता । एतेनैव "ऋतं पिबन्तौ" इत्याद्युक्तमाहात्म्यवता विष्णुनैव । जीवो रूपादिकं विजानाति यच्चात्र मुक्तौ परिशिष्यते तदेतत्किं कैर्विशेषणैर्विशिष्टमित्यर्थः । परिहारमाह- **एतद्वै तदिति** ॥ तत् त्वत्पृष्टं जीवनियामकभगवत्स्वरूपं एतद्वक्ष्यमाणविशेषणविशिष्टं वै प्रसिद्धमित्यर्थः ॥२.१.३॥

**वरद-** यत एवं धीरा अध्रुवेषु विषयेषु न प्रवर्तन्ते । किन्तु ध्रुवे मोक्षे एव प्रवर्तन्ते । त्वं च धीरो यतस्तस्मात् ते तुभ्यं ब्रह्म वक्ष्यामीति भावेनोच्यते-

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा मरणं प्राप्यात्मा भवति गौतम ॥ इति ॥ काठक २.२.६**

तद्व्याचष्टे- **इदमित्यादिना** ॥ इदं वाक्यं ब्रह्म प्रवक्ष्यामीति प्रतिज्ञावाक्यत्वात् ''ध्रुवमध्रुवेष्विह न प्रार्थयन्ते'' इति वाक्यस्यानन्तरस्थं इति ज्ञातव्यम् । ननु ब्रह्मस्वरूपस्यैव नचिकेतसा पृष्टत्वात् तदेव तस्मै प्रतिपादनीयम् । मरणानन्तरं जीवगतिस्त्वपृष्टा किमर्थं कथ्यत इत्यत आह- **जीवेति** ॥ ब्रह्मस्वरूपजिज्ञासवे हि तत्स्वरूपं यथावन्निरूपणीयम् । यथावन्निरूपणञ्च साधर्म्यवैधर्म्याभ्यां वस्तुविवेचने सत्येव भवति अतस्तद्विवेचनार्थं जीवस्य मरणानन्तरावस्था कथ्यत इत्यर्थः । प्रतिज्ञातं ब्रह्मगतिश्च निरूप्यते । ''योनिमन्ये प्रपद्यन्ते'' इत्यारभ्य श्लोकद्वयेन । तद्व्याख्याति- **य इति** ॥ कर्मफलभोक्तेत्यनेन योनिमन्ये इति श्लोकार्थः सूचितः । सुप्त्यादिमानित्यनेन ''य एषु सुप्तेषु'' इत्यर्थ उक्तः । ''यः प्रलयादिषु'' इत्यनेनापि ''य एषु सुप्तेषु जागर्ति'' इत्यस्य ''हन्त त इदं प्रवक्ष्यामि'' इत्यनेन ब्रह्म प्रवक्ष्यामि, यथा मरणं प्राप्य जीवो भवति तच्च वक्ष्यामीति प्रतिज्ञाद्वयमभिधाय पश्चात्क्रमेण तदुभयमभिधीयत इति किमर्थमङ्गीकर्तव्यम् । किं तर्हि ब्रह्म प्रवक्ष्यामीति प्रतिज्ञाय पश्चात्तन्निरूपणं क्रियत इत्येवार्थः किं न स्यादित्यत आह- **यदि हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनं इति** ॥ प्रतिज्ञातं ब्रह्मैवोत्तरत्राभिधीयते तर्हि जीवस्य यद्योन्यादिगमनमुच्यते तदपि ब्रह्मेति स्यात् । अन्यवस्तुप्रतिपादनस्य त्वयाप्यनङ्गीकृतत्वात् योन्यादिगमनस्य च ब्रह्मत्वे तस्यानित्यत्वप्रसङ्ग इत्यर्थः । ननु प्रतिज्ञाद्वयमित्यङ्गीकारेऽपि जीवस्वरूपस्य जिज्ञासितत्वात्तद्वर्णनं व्यर्थम् । नच जीवेशभेदज्ञापनाय जीववर्णनमिति वाच्यम् । तद्भेदस्याप्यजिज्ञासितत्वेन तज्ज्ञापनायोगादित्यत आह- **जीवादिति** ॥२.१.३॥

**वरद.खं-** यत एवमधीरा एवं विषयाभिरताः, धीरास्तु मोक्षाभिरता एव त्वञ्च धीरोऽसि अत उत्कृष्टपुरुषार्थसिद्ध्यर्थं ब्रह्म ते प्रवक्ष्यामीति समाप्तो ब्रह्मोपदेश इति शङ्कया पुनरपि विशेषज्ञानार्थं पृच्छति नचिकेताः- **येनेति** ॥

यैनैतेन भगवता रूपादिविषयाननुभवति पुरुषस्स भगवानत्र मुक्तजीव-नियामकतयावशिष्यते किमिति चोद्यार्थः । परिहारमाह- **परिशिष्यत एतद्वै तदिति ॥** परिशिष्यत इति पदं चोद्यपरिहारयोः साधारणम् । तदेतद्ब्रह्म मुक्तजीवे नियामकतया परिशिष्यत एवेति परिहाराभिप्रायः । यथावज्जानीयामिति ॥ २.१.३ ॥

**रा.खं-** नचिकेता अर्थात्प्राप्तामात्मनः स्तुतिं मत्वा, अलं स्तुत्या क्षिप्रं तत्त्वं वदेति भावेन पृच्छति- **येनेति ॥** येन एतेनैव ब्रह्मणा प्रेरितो रूपादीन् विजानाति तदेतत् जीवप्रेरकं ब्रह्मात्र मोक्षे परिशिष्यते मुक्तजीवप्रेरकत्वेन आस्ते किमिति प्रश्नार्थः । इति पृष्टो यमः प्रत्युत्तरमाह- **एतद्वै तदिति ॥** तत् त्वया परिशिष्यते किमिति पृष्टं एतद्वै एतद्गुणकं सत् परिशिष्यते वै असंशयमित्यर्थे वैनिपातः । परिशिष्यत इत्येतदत्राप्यन्वेति ॥ २.१.३ ॥

**उपनिषत्**

**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २.१.४ ॥**

**व्यास-** नियामकं विस्तार्य ब्रूहीत्याकाङ्क्षायां स्वप्नान्तमित्यादिना नियामकं ब्रह्म विस्तरेणाह- **स्वप्नान्तमिति ॥** स्वप्नान्तमित्यतः पूर्वं "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्" इति प्रतिज्ञावाक्यं द्रष्टव्यम् । स्वप्नान्तं स्वप्नाख्यमन्तम् । स्वप्नसुषुप्ती इति यावत् ॥ २.१. ४ ॥

**वामन** - रूपादिज्ञापकत्वं ब्रह्मलक्षणं ह्यत्रोक्तम् । तत् त्रिविधमस्तीत्याह– **स्वप्नान्तमित्यादिना ॥** स्वप्नाद्यवस्थाद्वयमुक्त्वा उभाविति पृथग्वचनात् उभयात्मकावस्था च गृह्यते । इमास्तिस्रोऽपि येनैव पश्यति । "बहिः शब्दादिकं जानन् पश्यन् स्वप्नं तथैव च" (मां.भा.२.१) इति वचनात् समुच्चयपक्षोऽपि गम्यते । तं महान्तं विष्णुं स्वामिनं मत्वा जीवो न शोचति ॥४॥

**वादि-** पुनरपि जाग्रत्स्वप्नसुषुप्तिप्रेरकत्वादिना भगवतो माहात्म्यातिशय-मुक्त्वा मुक्तेरपि नित्यजाग्रदवस्थारूपत्वात् प्रेरकत्वमपि हरेरावश्यकमिति भावेनाह- **स्वप्नान्तमिति ॥** स्वप्नान्तं जागरितान्तं जागरितस्थानं तत्रत्यव्यापारमिति यावत् । महान्तं सर्वोत्तमम् । मननानन्तरमात्मानं स्वस्वरूपं विशेषेण गोप्तुं रक्षितुं नेच्छति स्वतन्त्रभगवदिच्छयैव ममापि रक्षा भवेत् । अतोऽस्वतन्त्रेण मया मम रक्षणार्थं क्रियमाणो यत्नो व्यर्थ इति तत्रोदास्त इति भावः । एतत् स्वाप्नजाग्रदादिप्रवर्तकं जीवस्य हृदि स्थित्वा सुखसारस्यैव भोक्तृभूतभव्यसकलजगदीशानं व्याप्तं सर्वोत्तमं वस्तु तद्वै मुक्तनियामकतया मुक्तावपि परिशिष्यमाणम् । वैशब्देनेह जीवनियामकतया जीवहृदि स्थितो भगवान् तस्यैव जीवस्य मुक्तौ सत्यां कथं हृदि स्थितो न भवेत् ? तदाऽप्यस्वतन्त्रो जीवः स्वेष्टमुक्तेर्दातारं स्वतन्त्रं च स्वहृदिस्थं भगवन्तं कथं बहिष्कुर्यादिति युक्तिप्रसिद्धिं सूचयति । विभुपदेनापि व्याप्तस्य भगवतः कथं मुक्तौ हृद्यभाव इति युक्तिः सूचिता । सकलमूर्तद्रव्यसंयोगित्वं हि विभुत्वम् ॥ २.१.४ ॥

**वे.खं-** तदेवाह- **स्वप्नान्तमिति ॥** अत्र स्वप्नान्तशब्दः स्वप्नसुषुप्त्यु-भयाभिप्रायेण । येन प्रेरितो जीवः । उभौ तस्यैव विवरणं स्वप्नाख्योऽन्तः स्थानं स्वप्नान्तः तम् । "अन्तः स्थानं स्थलं वासः प्रदेश इति चोच्यते" (बृ.भा.६.३.११) इत्यभिधानात् । "जागरितान्तश्च" जागरितस्थानं च पश्यति तं महान्तं परममहत्त्वोपेतं अत एव विभुमात्मानं मत्त्वा धीरो न शोचति ॥ २.१.४ ॥

**वरद.खं-** माहात्म्यज्ञानपूर्वकं जानीयामिति नचिकेतसा प्रार्थितत्वात्त-न्माहात्म्यं निरूपयति- **स्वप्नान्तमित्यादिना ॥** स्वप्नान्ता स्वप्नावस्था, जागरितान्ता जागृदवस्था, स्वप्नान्तं जागरितान्तश्चेत्युभौ अन्तौ येन हरिणा पश्यति जीवः तं महान्तं विष्णुं ज्ञात्वा धीरो न शोचतीत्यर्थः ॥ २.१.४ ॥

**रा.खं-** मुक्तौ नियामकं ब्रह्मस्वरूपं विस्तरेण ब्रूहीति पृष्टो यमो विस्तरेणाह- **स्वप्नान्तमिति ॥**

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा मरणं प्राप्यऽऽत्मा भवति गौतम ॥**

इति उत्तराध्यायगतं प्रतिज्ञावाक्यं अत्रादौ योज्यमिति वदन्ति । भाष्ये अत्रैव व्याख्यानात् । पूर्वार्धः स्पष्टार्थः । उत्तरार्धस्य तु आत्मा जीवः मरणं प्राप्य यथा भवति तच्च प्रवक्ष्यामि । जीवेशभेदज्ञापनायेत्यर्थः । स्वप्नान्तं सुषुप्तिम्, जागरितान्तं स्वप्नं चोभौ सुषुप्तिस्वप्नौ येन प्रेरितो जीवः पश्यति तं महान्तमित्यन्वयः ॥ २.१.४ ॥

## उपनिषत्

**य [1]इदं मध्वदं वेदाऽत्मानं जीवमन्तिकात् ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद् वै**
**तत् ॥२.१.५॥**

## भाष्यम्

**जीवस्यान्तिके । न हि स्वस्य स्वयं जीवोऽन्तिके भवति । वस्त्वन्तरस्य हि दूरत्वमन्तिकत्वं वा ॥२.१.५॥**

**व्या-** मध्वदं देहे स्थित्वा सारभोक्तारम् । जीवमन्तिकात् जीवस्य समीपे । तत आत्मनो ज्ञातत्वात् स्वात्मानं गोप्तुं नेच्छति ।

**व्या.भा-** आत्मानं जीवमिति सामानाधिकरण्यप्रतीत्या जीवस्यात्माभेदः प्रतीयते । स प्रकृतप्रतिज्ञा विरुद्धोऽतस्तां निवारयन् जीवमिति द्वितीयां षष्ठ्यर्थत्वेन व्याकुर्वन् तस्यान्वयश्च दर्शयति- **जीवस्येति ॥** जीवमिति

---

१. ''इमम्'' इति वामनतपण्डिताचार्यपाठः ।

द्वितीयायाः षष्ठ्यर्थत्वानङ्गीकारे बाधकमाह- **नहीति** ॥ हीति सूचितामुपपत्तिं स्फोरयन्नाह- **वस्त्वन्तरस्येति** ॥ २.१.५ ॥

**वामन-** ''तं स्वात्मानं मत्वा'' इत्यभेदार्थयोजनायां को दोष इत्याशङ्कायामाह– **य इममिति** ॥ जीवस्यान्तिक इति जीवमन्तिकादिति व्याख्याति । ''षट्सु द्वितीया'' इति सूत्रेण द्वितीयायाः षष्ठ्यर्थत्वात् । ''त्रिषु पञ्चमी'' इति च सूत्रम् । य इमं मध्वदं पूर्णानन्दभुजं स्वस्वामिनं जीवस्यान्तिके हृदये नियामकत्वेन स्थितं वेद स ततः परं स्वात्मानं गोप्तुं नेच्छति । भगवदिच्छयैव स्वगुप्तिसम्भवात् । जीवपरयोरैक्यपक्षे जीवस्यान्तिके पर इति न युज्यते । तस्य ततो भेदाभावात् । भिन्नयोरेव हि अन्योन्यमन्तिकत्वं दूरत्वं वा भवति । तदभिप्रायेण प्राह– **नहीति** ॥ तस्मात् जीवस्यान्तिक एव ध्येयो भगवान् नतु जीवैक्येनेति सन्मतम् ॥२.१.५॥

**वे.भा-** नन्वेवं तर्हि ''य इदं मध्वदं वेदात्मानं जीवमन्तिकात्'' इति वाक्यविरोधः । तत्र सामानाधिकरण्यव्यपदेशेन जीवेशाभेदप्रतीतेरित्यतः तद्व्याचष्टे- **जीवस्येति** ॥ अनेन जीवमिति द्वितीया षष्ठ्यर्था । अन्तिकादिति पञ्चमी सप्तम्यर्थेत्युक्तं भवति । ननु जीवमिति द्वितीया कुतः षष्ठ्यर्थत्वेन व्याख्येया । ''आत्मानं जीवं स्वान्तिके वेदेति यथाश्रुतार्थे बाधकाभावादित्यत आह- **नहीति** ॥ स्वयं जीवः स्वस्यान्तिके हि यस्मान्न भवेत्तस्माज्जीवस्यान्तिक इति व्याख्येयमित्यर्थः । स्वयं जीवः स्वान्तिके कुतो न भवतीत्यतस्तस्य भेदसापेक्षत्वादित्याह- **वस्त्वन्तरस्येति** ॥ हि यस्मात् वस्त्वन्तरस्य वस्त्वन्तरात् दूरत्वमन्तिकत्वं वा । नतु तस्यैव तस्मादेव । अतो जीवः स्वयं स्वस्यान्तिके न भवतीत्यर्थः ॥ २.१.५ ॥

**वे.खं-** किञ्च य इदं इमं मध्वदं सुखभोक्तारं ''मध्वित्यानन्द उद्दिष्टः'' इतिवचनात् । भूतस्य, भव्यस्य, वर्तमानस्य चेशानमात्मानं भगवन्तं

जीवमन्तिकात् जीवस्यान्तिके वेद स ततो भगवज्ज्ञानसामर्थ्येनान्यविषयक-भयाभावात् न विजुगुप्सते आत्मानं गोप्तुं नेच्छति ॥२.१.५॥

**वरद.भा-** यद्यपि जीवेशभेदस्त्वेन साक्षान्न जिज्ञासितः । तथापि यथावद्ब्रह्मज्ञानस्य जिज्ञासितत्वाद्यथावज्ज्ञानान्तर्भूतो जीवेशभेदोऽपि जिज्ञासित एवेति भावः । ''य इदं मध्वदं वेदात्मानं जीवमन्तिकात्'' इत्यत्रात्मानमेव जीवमिति सामानाधिकरण्यप्रतीतिनिरासार्थमाह- **जीवस्येति** ॥ अनेन जीवमिति द्वितीया षष्ठ्यर्थ इति सूचितम् । अन्यथा अन्तिक इत्यस्यान्वया-भाव इति आत्मानं जीवमिति सामानाधिकरण्यमेव किं न स्यादित्यत आह- **नहीति** ॥ कुतो न भवतीत्यत आह- **वस्त्वन्तरस्येति** ॥ २.१.५ ॥

**वरद.खं-** इदं मध्वदं सुखभोक्तारमात्मानं विष्णुं जीवमन्तिकात् जीवस्य समीपे यो वेद सः ततो विष्णोरन्यमात्मानं गोप्तुं नेच्छतीत्यर्थः ॥२.१.५॥

**रा.खं-** योऽधिकारी इदं इमं मध्वदं मधु सुखमत्तीति मध्वदः तम्, अत्तेरच्प्रत्ययः, देहे स्थित्वा सारभोक्तारमिति यावत्, जीवमन्तिकात् जीवसमीपे तन्नियामकतया स्थितं आत्मानं भूतभव्यस्य, द्वन्द्वैकवद्भावः, भूतभाविनोरीशानं प्रेरकं वेद जानाति स ततः आत्मनो नियामकतया ज्ञातत्वात् न विजुगुप्सते, गुपू रक्षणे, आत्मानं गोप्तुं रक्षितुं नेच्छति । भगवानेव सदा सर्वत्र रक्षकतयाऽऽस्त इति ज्ञात्वा स्वात्मरक्षणार्थं न प्रयतत इत्यर्थः । एतद्वै तत् यत् त्वया पृष्टं तत् एतद्वै प्रागुक्तगुणकं वै ॥२.१.५॥

### उपनिषत्

**यः पूर्वं तपसोऽजातमद्भ्यः पूर्वमजायत ।**
**गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्**
**वै तत् ॥२.१.६॥**

### भाष्यम्

> 'अम्नामभ्यश्च भूतेभ्यस्तपोनाम्नः शिवादपि ।
> पूर्वं यो जनयामास पूर्वाजातं चतुर्मुखम् ॥
>
> [१]स्वात्मानं च गुहासंस्थं सर्वभूतैः सहाभिभूः ।
> यः पश्यति सदा विष्णुस्स एष हृदि संस्थितः ॥'इति च ॥

**यथा "मुखादिन्द्रश्चाग्निश्च" इत्यादिना जाता एवेन्द्रादयः कश्यपात् पुनर्जायन्ते न तथा भगवतो ब्रह्मा । किन्त्वजातमेवाद्भ्यः पूर्वमजायत जनयामास । अजायतेति "जज्ञे बहुज्ञम्" इतिवदन्तर्णीतणिच् ॥२.१.६॥**

**व्यास**- यः पूर्वमिति वाक्यं दुर्गमार्थत्वाद्व्याचष्टे- **अम्नामभ्य इति** ॥ गुहां प्रविश्येति वाक्यं योजनाप्रतीतेर्व्याचष्टे- **स्वात्मानमिति** ॥ कस्मादपि पूर्वमजातं पूर्वाजातमिति सूचितमर्थं स्ववाक्येन विशदयति- **यथेत्यादिना** ॥ यथेन्द्रादिजनकस्य कश्यपस्य न तेभ्य उत्तमत्वं न तथा विष्णोः ब्रह्मणः । तस्य पूर्वाजाततज्जनकत्वादुत्तमत्वमेवेति भावार्थः । अजायतेत्यस्य स्वयमुत्पन्न इत्यर्थत्वात् कथं जनयामासेति णिजर्थतया व्याख्येत्यतः प्रयोगदर्शनेनोपपादयति- **अजायतेति** ॥ २.१.६ ॥

**वामन** - सोऽयं भूतभव्येशो देवान् ब्रह्मादीनसृजदित्यभिप्रायेणाह- **यः पूर्वमिति** ॥ एतदभिप्रायं "अम्नामभ्यश्च भूतेभ्यः" इत्यादिना महावराहवचनेन स्पष्टयति । "पञ्चम्यामाहुतावापः" (छं.५.२.११) इत्यादावम्नामकत्वं भूतानां प्रसिद्धम् ।

> **दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे ।**
> **त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा ॥"**अनु.३.४.३७

---

१. सर्वेषामेव भूतानां हरिर्नित्यं हृदि स्थितः ॥ स्कन्दपुराणम् नागरखण्डम् ॥

'उग्रतपोनामा योग्यो रुद्रपदस्य यः'' (अनु.४.१.४) इत्यादिना महातपस्तत्त्वा धर्मधर्म्यभेदाच्च तपोनामकः शिवः । विष्णुना जायमानोऽपि तत्पूर्वमन्यस्मादजातत्वादजनामकश्चतुर्मुखः । ''स्वात्मानं च'' इत्यादिना ''गुहां प्रविश्य'' इत्यादिवाक्यशेषं व्याख्याति । अभिभूः सर्वाधिकशक्तिः । पूर्वाजातजननं यथावद् व्युत्पादयति । यथैव इन्द्रादयः पूर्वं विष्णोर्जाता एव कश्यपाज्जायन्ते तथैव ब्रह्मापि पूर्वमन्यस्माज्जात एव विष्णोः पुनर्जायत इति न मन्तव्यम् । किन्त्वन्यस्मादजात एवायमस्माज्जायते । कुतः ? अजातमेव हि भगवान् अबादिभ्यः पूर्वमिमं जनयामास । ''जज्ञे बहुज्ञम्'' इत्यत्र जनयामासेत्यर्थो गम्यते, तद्वदत्राप्यविरोधः ॥ २.१.६ ॥

**वादि-** ''यः पूर्वं तपसो जातमद्भ्यः'' इत्यत्र अद्भ्यः आ समन्ताद्रक्षकत्वेनाप्पदवाच्येभ्यः पञ्चमहाभूतेभ्यः तपसः दिगम्बरत्वजटिलत्वादिना तपःप्रवर्तकाद्रुद्राच्च पूर्वमजातं प्राग् भगवदितरस्मात् कस्माच्चिदप्यजातं अभिनवपुत्रमित्यर्थः । ब्रह्माणमजायत अन्तर्णीतो णिच् । जनयामासेत्यर्थः । सकलजीवहृदयगुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतेभिस्तैस्तैर्जीवैस्सह व्यपश्यत ॥२.१.६॥

**वे.भा-** ''यः पूर्वं तपसो जातम्'' इति मन्त्रस्य यो मुमुक्षुः पूर्वं तपसो ज्ञानरूपात् ब्रह्मणो जातं हिरण्यगर्भं किमपेक्षया पूर्वमित्यत आह- **अभ्द्यः पूर्वमजायतेति ॥** यः अभ्द्यः भूतेभ्यः पूर्वमजायत । तं प्रथमजं सर्वप्राणिहृदयगुहां प्रविश्य तिष्ठन्तं भूतेभिर्भूतैः सह तिष्ठन्तं यः पश्यति एतद्वै तदिति व्याख्यानमसत् । एतद्वै तदिति वचनानुसारेण यः पूर्वमिति यच्छब्दस्य विष्णुपरत्वेन मुमुक्षुपरत्वाभावात् । नहि नचिकेतसा मुमुक्षुस्वरूपं पृष्टम् । तपश्शब्दस्य परब्रह्मपरत्वे एकस्य पूर्वमित्यस्य व्यर्थत्वाच्च । अभ्द्यः पूर्वं इत्येतावता पूर्तेः । अभ्द्यः पूर्वं जातमित्यन्वयोपपत्त्याऽजायतेत्यस्य व्यर्थत्वात् अयुक्तत्वाच्च । यच्छब्दाध्याहारेण योजनायां स एव दोषः । गुहाप्रविष्टत्वस्य

विष्णुलिङ्गत्वस्योक्तत्वेन चतुर्मुखविशेषणत्वायोगाच्च । भूतानां हृदये अवस्थानाभावेन तैः सह तिष्ठन्तमित्युक्त्ययोगाच्च । पूर्वमेकस्य यच्छब्दस्य विद्यमानत्वेन यो भूतेभिरिति यच्छब्दस्य व्यर्थत्वात् प्रमाणविरोधाच्चेति भावेन वाक्यभेदमङ्गीकृत्य प्रमाणेन मन्त्रं व्याचष्टे- **अम्नामभ्य इति** ॥ ननु भूतानामम्नामकत्वं कथम् । अम्नाम्नो भूतविशेषवाचकत्वादिति चेन्न । पञ्चीकरणपक्षे भूतविशेषस्यापि सर्वभूतात्मकत्वेनाम्नाम्नः सर्वभूतवाचकत्वं ज्ञायते । भूतेभ्यः तदभिमानिभ्यः । शिवादपि अहङ्कारतत्त्वाभिमानिनः । अजायतेत्यस्यार्थो जनयामासेति । पूर्वाजातमित्युक्त्या नास्मत्पक्षे पूर्वशब्दस्य वैयर्थ्यमित्युक्तं भवति । चतुर्मुखमिति विशेष्योक्तिः । गुहां प्रविश्येत्येतत् चतुर्मुखपरमिति प्रतीतिनिरासाय व्याचष्टे- **स्वात्मानश्चेति** ॥ अभिभवति सर्वानित्यभिभूः । सर्वभूतैः सह पश्यतीत्यन्वयः । एतद्वै तदित्यस्यार्थमाह- **स एष इति** ॥ तथाच जीवमन्तिकादित्युक्तजीवसमीपस्थभगवत्स्वरूप-प्रतिपादनायायं मन्त्रः प्रवृत्त इति भावः । नन्वेवं व्याख्यानेऽपि पूर्वमजातमिति विशेषणं व्यर्थम् । व्यावर्त्याभावात् । नहि कश्चित् पूर्वं जातः पुनर्जायते । येन तत्सार्थकं स्यात् । यः पूर्वमजातं चतुर्मुखं तपसोऽद्भ्यः पूर्वमजायतेत्यनन्वय-श्चेत्यत आह- **यथेति** ॥ इत्यादिना वाक्येन जाताः भगवन्मुखादिना जातत्वेनावगता इत्यर्थः । न तथा भगवतो ब्रह्मा पूर्वं जात एव जायते । ननु हिरण्यगर्भस्याद्भ्यः पूर्वं जननाङ्गीकारे "अद्भ्यः सम्भूतो हिरण्यगर्भः" (म.ना.उ.१.१२) इति विरोध इति चेन्न । तद्वाक्यस्य ब्रह्माण्डान्तः-सृष्टिपरत्वात् । अस्य बाह्यसृष्ट्यपेक्षत्वादिति । अजायतेत्यस्य स्वयमुत्पन्न इत्यर्थत्वात् कथं जनयामासेति व्याख्यानमित्यतः अन्तर्णीतणिच्त्वान्नानुपपत्ति-रिति प्रयोगपूर्वमाह- **अजायतेति** ॥ "या प्राणेन संविशति" इति मन्त्रः प्रसिद्धादितिपर इत्यनुपपन्नम् । पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां त्रयाणामेव नचिकेतसा पृष्टत्वेनादितिकथनस्यासङ्गतत्वात् । अतो विष्णुपर एवायं मन्त्रः ॥

**वे.खं-** जीवस्यान्तिके विद्यमानं हृद्गतं भगवत्स्वरूपं कीदृशमित्याकाङ्क्षायां तत्स्वरूपं वक्तुं पुनः प्रतिजानीते- **एतद्वै तदिति** ॥ तत् जीवस्यान्तिके विद्यमानं भगवत्स्वरूपं एतद्वै यः पूर्वमजातं चतुर्मुखं तपसस्तपोनाम्नः शिवात् अब्भ्योऽम्नामकभूतेभ्यश्च पूर्वमजायत जनयामास । यश्च हृद्गुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतेभिर्भूतैः सह व्यपश्यत पश्यति । एतच्छब्दस्य पूर्वेणान्वयः ॥२.१.६॥

**वरद-** "यः पूर्वं तपसो जातमब्भ्यः पूर्वमजायत" इत्येतद्व्याचष्टे- **अम्नामभ्य इति** ॥ पूर्वमजातमिति विशेषणस्य कृत्यमाह- **यथेति** ॥ अजायतेत्यस्य जनयामासेत्यर्थः कथमित्यत आह- **अजायतेति** ॥२.१.६॥

**रा.खं-** पुनर्भगवतो महिमोक्तिपूर्वकं त्वत्पृष्टमेवंरूपमिति बहुभिर्मन्त्रैराह- **य इति** ॥ यो भगवान् अजातं पूर्वमजातं चतुर्मुखं तपसः तपोनामकाच्छिवात् पूर्वं अब्भ्यः अम्नामकेभ्यो भूतेभ्यश्च पूर्वमजायत अजनयत्, अन्तर्णीतणिच्, यो भगवान् गुहां हृदयगुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतेभिः भूतैस्सह व्यपश्यति विशेषेण पश्यति, अडागमः छान्दसः, एतद्वै तत् । यत् त्वया पृष्टं तत् एतद्वै उक्तगुणकं वै । अजातमिति विशेषणं तु भगवन्मुखाद्यवयवतो जाता एवेन्द्रादयः कश्यपात् पुनर्जायन्ते, न तथा भगवतो ब्रह्मा, किन्तु पूर्वमजात एव भगवतो जात इति वक्तुम् ॥ २.१.६ ॥

उपनिषत्

**या प्राणेन संविशत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत ॥ एतद् वै तत् ॥ २.१.७ ॥**

## भाष्यम्

'अदनाददितिर्विष्णुर्यः प्राणसहितः स्थितः ।
उत्तमो देवताभ्यश्च सोऽत्मानं विविधात्मना ॥

मत्स्यकूर्मादिरूपेण गुहासंस्थमजीजनत् ।
भूतैस्सह महाविष्णुः परमात्मा युगे युगे ॥'' इति च ॥

**देवतामयी देवतोत्तमा । प्राणेन सहितो भवति । गुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतैस्सह विविधं जनयामास ॥ २.१.७ ॥**

**व्या.भा-** या प्राणेनेत्येतत्स्त्रीलिङ्गात्, प्रसिद्धेश्च कश्यपभार्यादितिपरत्व-प्रतीतेः प्रमाणमुदाहृत्य स्ववाक्येन व्याचष्टे- **अदनादिति** ॥ उत्तमो देवताभ्यश्चेति व्याख्यातमपि देवतामयीतिपदं देवतात्मिकेतिप्रतीतिं निवारयन् व्याचष्टे- **देवतेति** ॥ या प्राणेनेति व्याख्यातमपि प्राणेन प्राणरूपेण संविशतीत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे- **प्राणेनेति** ॥ ''गुहां प्रविश्य तिष्ठन्तीम्'' इत्यादिविशेष्याप्रतीतेर्व्याचष्टे- **गुहामिति** ॥ २.१.७ ॥

**वामन-** एवं ब्रह्मादिसृष्टिमुक्त्वा भगवतो मत्स्यादिरूपेण स्वरूपाभिव्यक्तिं च वक्ति– **या प्राणेनेति** ॥ तद्व्याख्याति– **अदनाददितिरित्यादिना** ॥ इति च महावराहे । देवतामयीत्यादिना स्ववचनेनैव पदार्थान् विवृणोति । ''विकारप्राचुर्यप्राधान्येषु मयट्'' इति सूत्रात् उत्तमार्थत्वं च मयटः प्रसिद्धम् । ''प्राणेन सम्भवति'' सह स्थितो भवति । सर्वप्राणिनां हृदयं प्रविश्य तिष्ठन्तीं स्वात्मानं मत्स्यादिरूपेण विविधं व्यक्तीचकार । ''अजायमानः'' इति श्रुतेः । भूतानि तु जनयामास । ''तान्यसृजत'' इति सर्वसृष्टिश्रुतेः । एषामदनाददितिः स उच्यते ॥ २.१.७ ॥

**वादि-** अदितिः अदनाददितिशब्दवाच्या देवतामयी सर्वदेवोत्तमा या परदेवता प्राणेन सह संविशन्ती सा अस्मिन् युगे इव युगे युगेऽपि भूतेभिः सह

गुहां प्रविश्य तिष्ठन्तीं स्वात्मानं व्यजायत मत्स्यकूर्मादिरूपेण जनयामास । युगे युगे प्रजाः सृष्ट्वा तद्धृदि अन्तर्यामितया स्वात्मानं सृष्ट्वा बहिर्ब्रह्मादीनामुपकाराय मत्स्यकूर्माद्यवताराश्च सृजतीति भावः ॥२.१.७॥

**वे.भा-** नन्वेतदप्ययुक्तम् । अदितिशब्दस्य देवमातरि रूढत्वेन विष्णौ स्त्रीलिङ्गान्तादितिशब्दप्रयोगायोगात् । देवतामयीत्युक्तदेवतास्वरूपत्वायोगात् । प्राणेन प्राणस्वरूपेणेत्युक्तमुख्यप्राणस्वरूपत्वस्यासम्भवाच्च । किञ्च "गुहां प्रविश्य तिष्ठन्तीम्" इत्युक्तो गुहासंस्थः किं विष्णुरन्यो वा । नाद्यः । तस्य "या भूतेभिर्व्यजायत" इति उक्तभूतजन्यत्वासम्भवात् । न द्वितीयः । प्रागुक्तविरोधादित्यतस्तं मन्त्रं प्रमाणेन व्याचष्टे- **अदनादित्यादिना** ॥ अदनाददितिरित्यनेनादितिशब्दो योगेन विष्णुपर इत्युक्तं भवति । नच स्त्रीलिङ्गानुपपत्तिः । भगवतः स्त्रीरूपत्वस्यापि भावात् । ननु स्मृतौ "उत्तमो देवताभ्यश्च" इत्येतत् कस्य व्याख्यानमिति न प्रतीयत इत्यतो देवतामयीति पदव्याख्यानमिति भावेन तदनूद्य व्याचष्टे- **देवतेति** ॥ मयटः प्राधान्यार्थकत्वादिति भावः । इदञ्च प्रसिद्धादितिपरत्वेऽनुपपन्नम् । नचानेन देवतास्वरूपत्वमुच्यत इति वाच्यम् । विशिष्टे विशिष्टाभेदस्य बाधात् । चैतन्यैक्यविवक्षायामदितिदेवताशब्दयोर्लाक्षणिकत्वापातात् । ननु प्राणेन संविशतीत्यस्य प्राणसहितः स्थित इति कथमर्थस्ततस्तस्याप्रतीतेरित्यतः प्राणेन संविशतीत्येतद्व्याचष्टे- **प्राणेनेति** ॥ सहयोगे तृतीया इति भावेन सहित इत्युक्तम् । अनेन प्राणरूपेणेति व्याख्यानमपास्तम् । अदितेः प्राणस्वरूपत्वस्य तेनाप्यनङ्गीकारात् । चैतन्यैक्यस्याप्रामाणिकत्वात् । संविशतीत्यस्यार्थः- **स्थितो भवतीति** ॥ ननु "मत्स्यकूर्मादिरूपेण गुहासंस्थमजीजनत्" इत्यनुपपन्नम् । मत्स्यकूर्मादिरूपस्य बहिष्ठत्वेन गुहासंस्थत्वाभावादित्यतो गुहां प्रविश्येति वाक्यं व्याचष्टे- **गुहामिति** ॥ स्वात्मानमिति विशेष्याध्याहारः । भूतैः सहेत्युक्त्या भूतेभिरिति तृतीया न

हेत्वर्थेत्युक्तं भवति । विविधं मत्स्यकूर्मादिरूपेण । तथाच स्मृतौ गुहासंस्थ-मित्येतत् आत्मानमित्यस्य विशेषणमिति नानुपपत्तिरिति भावः ॥२.१.७॥

**वे.खं-** किञ्च या देवतामयी देवतोत्तमा अदनाददितिः स्त्रीरूपा भगवती प्राणेन मुख्यप्राणेन सहिता संविशति देहादौ स्थिता भवति या च गुहां प्रविश्य तिष्ठन्तीं स्वात्मानं भूतैः सह विविधं मत्स्यकूर्मादिरूपेण अजायत जनयामास । एतद्वै तदित्यन्वयः ॥२.१.७॥

**वरद-** "या प्राणेन संविशत्यदितिर्देवतामयी" इत्येतद्व्याचष्टे- **अदनादिति** ॥ एवं प्रमाणवचनेन व्याख्यातं श्लोकं स्ववाक्येन व्याख्याति- **देवतेति** ॥ २.१.७ ॥

**रा.खं- या प्राणेनेति** ॥ अदनात् सर्वजगद्भक्षणात् अदितिनाम्नी देवतामयी सर्वदेवोत्तमा, मयट् प्राधान्यार्थे, या भगवत्तनुः प्राणेन मुख्यवायुना सह संविशति तिष्ठति, या च भगवत्तनुः गुहां प्रविश्य तिष्ठन्तीं स्वकीयामेव तनुं भूतेभिः भूतैः प्राणिभिस्सह व्यजायत विविधतया जनयामास, अन्तर्णीतणिच्, मत्स्यादिनानारूपतया स्वात्मानं प्रादुर्भावयामास, प्राणिनश्च देहयोगेन नानाविधानुत्पादयामासेति यावत् । एतद्वै तत् त्वया पृष्टं यत् तत् एतद्वै इति ॥२.१.७॥

### उपनिषत्

**[१]अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।**
**दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥२.१.८॥**

---

१. आचार्योऽरणिराद्यस्स्यादन्तेवास्युत्तरारणिः ।
तत्सन्धानं प्रवचनं विद्यासन्धिः सुखावहः ॥ भाग. ११.१०.१२ ॥
यथा अरणिमथनजोऽग्निरेव स्वर्गादिहेतुर्नान्यः तद्वदाचार्यप्रवचनजन्यैव विद्या मोक्षहेतुर्नान्य इति भावः ॥ सुधीन्द्रतीर्थव्याख्यानम् ॥

भाष्यम्

**'सर्वज्ञो भगवान् विष्णुररण्योर्गुरुशिष्ययोः ।**
**सुभृतः स्तूयते नित्यं जानद्भिः पुरुषोत्तमः'' इति च ॥**

**[1]अर्यते ण आभ्यामित्यरणी ॥२.१.८॥**

**व्यास-** अरण्योर्गुरुशिष्ययोः । अदनादग्निः । जातं वेत्तीति जातवेदाः भगवान्निहितः ॥ २.१.८ ॥

**व्या.भा-** अरण्योर्निहित इति वाक्यं प्रसिद्धाग्निपरत्वप्रतीतिं निवारयन् व्याचष्टे- **सर्वज्ञ इति ॥** सर्वज्ञ इति जातवेदा इत्यस्यार्थः । जागृवद्भिः इत्येतस्य प्रतिपदम्- **जानद्भिरिति ॥** गुरुशिष्ययोररणीत्वं कथमित्यतः तद्व्युत्पाद्य दर्शयति- **अर्यत इति ॥** अर्यते ज्ञायते णः सुखरूपो भगवानाभ्यां गुरुशिष्याभ्यामित्यरणी गुरुशिष्यौ इत्यर्थः ॥ २.१.८ ॥

**वामन-** सोऽयं भगवान् ब्रह्मादिभिरीड्यः पूज्यश्चेत्याह- **अरण्योरिति ॥** ''सर्वज्ञः'' इत्यादिना तद्व्याख्याति । जातं जातं वस्तुजातं सर्वं वेत्तीति जातवेदाः सर्वज्ञ उच्यते । ब्रह्माद्यङ्गनेतृत्वादग्निनामकोऽयं भगवान् विष्णुः ।

**यथैवाग्न्यादयः शब्दाः प्रवर्तन्ते जनार्दने ।**
**तथा निरुक्तिं वक्ष्यामोऽज्ञानिनां ज्ञानसिद्धये ॥ इति व्यासनिरुक्ते**

स भगवान् अरणिशब्दितयोर्गुरुशिष्ययोः सूक्ष्मरूपेणाव्यक्ततया नित्यं सन्निहितो भवति । अथ जिज्ञासाख्यमथनसमये लिङ्गव्यक्ततया सुभृतो लक्ष्यते । यथा गर्भिणीभिः सुभृतो गर्भस्तद्वदेव । अथ मथनान्ते ध्यातः प्रसूत इव प्रादुर्भविष्यति । अत्र मनुष्यशब्देन जीवा उच्यन्ते । ''ततो मनुष्या अजायन्त'' (बृ.उ.३.४.३) इत्यादिवत् । नित्यं मननादिशीलत्वान्मनुष्य-शब्दितैर्देवादिभिः दिवसे दिवसे निरन्तरमीड्यः स भगवान् । हविष्मद्भिः

१. ''आर्यत रणः'' इति वामनपण्डिताचार्यपाठः ।

विष्णुयाजिभिः । ''यज्ञेन यज्ञमयजन्त देवाः''(ऋ.सं.१०.९०.१६) इत्यादि श्रुतेः । जागृवद्भिः तमेतं पुरुषोत्तमं जानद्भिः । अरणिशब्दं गुरुशिष्यविषये निर्वक्ति– **आर्यत रण आभ्यामित्यरणी इति** ॥ आर्यत आ समन्तादध्यगम्यत रणः शब्दो वेदादिशब्दराशिः वेदान्तश्च आभ्यामित्यरणी इति गुरुशिष्यौ । ''ऋ गतौ'' ''रण शब्दे'' इति हि धातुः । आर्यत रणः सम्भरणमन्त्रात्मकः शब्दः आभ्यामिति हि प्रसिद्धारणी अप्युक्ते । ''यो अश्वत्थः शमीगर्भः''(का.सं.७.४८) इत्यादिको ह्यरणीसम्भरणमन्त्रः ॥२.१.८॥

**वादि-** तर्हि सर्वैरपि किमिति न दृश्यत इत्यत आह- **अरण्योरिति** ॥ गर्भिणीभिः सुभृतो गर्भ इव । ''ऋ गतौ'' इति धातोः अर्यत इति कर्मव्युत्पत्त्या अरण्योरिति शब्दनिष्पत्तिर्भवति । तथा च णं सुखरूपं परं ब्रह्म अर्यते ज्ञायते आभ्यामित्यरणी हरितत्त्वज्ञानिनौ गुरुशिष्यौ । तयोर्निहित इत्यर्थः । औपनिषदः पुरुषः उपनिषदभ्यासवतामेव ज्ञेयो न सर्वस्य । यथा गर्भिणीनिहितो गर्भः तद्वदिति भावः । दिवे दिवे दिने दिने जागृवद्भिः ज्ञानिभिः ईड्यः स्तुत्य इत्यर्थः ॥ २.१.८ ॥

**वे.भा-** ''अरण्योर्निहितो जातवेदाः'' इति मन्त्रः प्रसिद्धाग्निपर इत्यसत् । तत्कथनस्यासङ्गतत्वादिति भावेन तं मन्त्रं विष्णुपरतया प्रमाणेन व्याचष्टे- **सर्वज्ञ इति** ॥ जातवेदा इत्यस्यार्थः- **सर्वज्ञ इति** ॥ जातं वेत्तीति जातवेदाः । अरण्योरित्यनुवादेन गुरुशिष्ययोरिति व्याख्यानम् । निहित इत्यस्यार्थः- **सुभृत इति** ॥ जागृवद्भिरीड्य इत्यस्यार्थः- **जानद्भिः स्तूयत इति** ॥ नचैवं सत्यग्निशब्दानुपपत्तिः । तस्य प्रागेव भगवत्परतया व्याख्यातत्वात् । गुरुशिष्ययोः कथमरणीशब्दवाच्यत्वमित्यतस्तद्व्युत्पादयति- **अर्यत इति** ॥ अर्यते ज्ञायते ण आनन्दरूपो ''णश्च निर्वृतिवाचकः'' (म.भा.उद्योग.६९.५) इत्युक्तेः । बलरूपो वा ''णकारो बलम्'' (ऐ.उ.३.२.६) इति श्रुतेः ॥८॥

**वे.खं-** किञ्च जातं वेत्तीति जातवेदाः सर्वज्ञो गर्भिणीभिः गर्भो यथा सुभृतः सुधृतः तथा अरण्योः अर्यते णः सुखरूपो बलरूपो वा भगवान् आभ्यामित्यरणी गुरुशिष्यौ तयोर्निहितः सुभृतो जागृवद्भिः जानद्भिः हविष्मद्भिः पूजासाधनद्रव्यवद्भिश्च मनुष्यैः दिवे दिवे प्रतिदिनं ईड्यः स्तुत्यः योऽग्निः अदनादग्निनामा भगवान् एतद्वै तत् ॥ २.१.८ ॥

**वरद-** ''अरण्योर्निहितो जातवेदाः'' इत्यस्यार्थः- **सर्वज्ञ इति ॥** कथं गुरुशिष्ययोररणीत्वमित्यत आह- **अर्यत इति ॥** ण इति सुखस्वरूपो हरिरुच्यते ॥ २.१.८ ॥

**रा.खं- ॥ अरण्योरिति ॥** ''ऋ गतौ'' इत्यतः कर्मण्यकारे गुणे च अरेति रूपम् । अरः ज्ञायमानः णः सुखरूपो हरिः याभ्यां गुरुशिष्याभ्यां तौ गुरुशिष्यावरणौ । समासान्त इकारः । अरण्योः गुरुशिष्ययोः, जातवेदाः जातं सर्वं वेत्तीति जातवेदाः, जातमित्युपलक्षणम्, सर्वज्ञो हरिः निहितः नितरां स्थितः । क इव ? गर्भिणीभिः स्त्रीभिः सुभृतः सम्यक् धृतः गर्भ इव, अग्निः अरण्योः गुरुशिष्ययोः निहितः । अदनादग्निनामा हरिः जागृवद्भिः भगवज्ज्ञानवद्भिः, न हि ज्ञानादितोऽन्यज्जागरणमस्ति, ''या निशा सर्वभूतानां तस्यां जागर्ति संयमी'' (गीता.२.६९) इत्यादेः, हविष्मद्भिः यज्ञसाधनवद्भिः मनुष्येभिः मनुष्यैः दिवे दिवे प्रतिदिनं ईड्यः स्तुत्यो वर्तते ॥ २.१.८ ॥

### उपनिषत्

**यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति । तं देवास्सर्वे अर्पितास्तदु नात्येति कश्चन । एतद् वै तत् ॥२.१.९॥**

**व्यास-** सृष्टिप्रलययोः सूर्यो यत उदेति, अस्तमदर्शनं च यत्र गच्छति तं देवा अर्पिताः प्राप्ताः ॥२.१.९॥

**वामन-** तत्स्तोतॄणां देवादीनां स एव ह्याश्रयश्चेत्याह— **यतश्चेति** ॥ यदाश्रयात् सूर्यस्योदयादिस्तस्मिन्नेव सर्वे देवाः समाश्रिताः । नच तदाज्ञादिकं कश्चनात्येति भूतभव्येशानत्वात् तस्य ॥२.१.९॥

**वे.खं-** किञ्च सूर्यः सृष्टिकाले यत उदेति यत्र च प्रलयकाले अस्तं अदर्शनञ्च गच्छति तं सर्वे देवा अर्पिताः प्राप्ताः तद्भगवत्स्वरूपं कश्चन नात्येत्येव ॥२.१.९॥

**वरद.खं-** सूर्यो यतो विष्णोरुदयास्तमयावेति सर्वे देवास्तं विष्णुमर्पिताः प्राप्ताः । एतद्वै तदित्यस्य सर्वत्रापि यदेतत् ब्रह्म मुक्ते नियामकतया अवशिष्यत एवेत्यर्थः ॥ २.१.९ ॥

**रा.खं-** पुनश्च महिमोक्तिपूर्वकं त्वत्पृष्टमेतादृगित्याह- **यतश्चोदेतीति** ॥ सूर्यः सृष्टिकाले यतो यस्मादुदेति, यत्र च यस्मिंश्च हरौ प्रलयकाले अस्तमदर्शनं गच्छति तं सर्वे देवा अर्पिताः । तमाश्रित्य स्थिता इत्यर्थः । तत् तं सर्वदेवाश्रयं गुणतः स्वरूपतो वा कश्चन कोऽपि न उ नैवात्येति नातिक्रामति । एतद्वै तत् त्वया पृष्टमेतद्वै अरण्योरित्यादिनोक्तगुणकं वै ॥ ॥२.१.९॥

उपनिषत्

**यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥२.१.१०॥**

भाष्यम्

**यः प्रादुर्भावगो विष्णुर्देहादिषु च संस्थितः ।**
**स एव मूलरूपश्च साक्षान्नारायणाभिधः ॥**

**मूलरूपश्च यो विष्णुः प्रादुर्भावादिकश्च सः ।**
**गुणतः स्वरूपतो वाऽपि विशेषं योऽत्र पश्यति ॥**

**अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम् ।**
**भेदाभेदविदश्चात्र तमो यान्ति न संशयः ॥**

**तथैवावयवानां च गुणानां च परस्परम् ।**
**क्रियाणां तेन चैतेषां भेदविच्चोभयं विदुः ॥**

**यान्त्येवान्धन्तमो नात्र कार्या काचिद्विचारणा ॥**

**इति च ॥२.१.१०॥**

**व्यास-** ''गुहां प्रविश्य तिष्ठन्तीम्'' इत्यत्र ब्रह्मादिभूतनियामकत्वेनात्मानं भूतेभिर्भूतैः सह व्यजायत जनयामासेत्युक्तं तत्र मूलरूपादवताररूपाणां भेदो नास्तीत्याह- **यदेवेहेति** ॥ उक्तं भेदाभावं भेददर्शिनो भेदाभेददर्शिनश्च अनर्थोक्त्या समर्थयते- **मृत्योरिति** ॥ २.१.१० ॥

**व्या.भा-** ''यदेवेह'' इत्येतद्यदस्मिन् शरीरे चैतन्यं तदेवामुत्र परदेहेऽपि इत्यन्यथाप्रतीतिं निवारयन्व्याचष्टे- **य इत्यादिना** ॥ ''मृत्योः स मृत्युम्'' इत्यादि पुनः पुनः जायते म्रियते चेति प्रतीतिं निवारयन् व्याचष्टे- **गुणत इति** ॥ अनेन ''नेह नाना'' इति व्याख्यातं भवति । इवशब्दार्थमाह- **अत्यल्पमपीति** ॥ इवशब्दस्यार्थान्तरमाह- **भेदाभेदेति** ॥ अत्र भगवति तद्रूपेषु च । करचरणाद्यवयवादीनां भेदभेदाभेददर्शिनोऽनर्थकथनं ''मृत्योः स मृत्युं गच्छति'' इति । तद्व्याचष्टे- **तथैवेति** ॥ २.१.१० ॥

**वामन-** ननु तदंशानां मत्स्यादीनां केवलतात्कालिकत्वात् भूतभव्येशानत्वं न युक्तमित्याशङ्क्याह– **यदेवेति** ॥ अस्य वाक्यस्याभिप्रायं ''यः प्रादुर्भावगः'' इत्यादिना महावराहवचनेन व्यक्तं वक्ति । यदेव अत्र प्रादुर्भावादिरूपं विष्णोः तदेवामुत्र क्षीरसमुद्रादिगतमूलरूपम् । यच्च तन्मूलरूपं तदेवात्राप्यनुवृत्तम् । नाणुरप्यनयोर्भेद इत्यर्थः । ''गुणतः'' इत्यादिना ''मृत्योः स मृत्युम्'' इत्यादेरभिप्रायमाह । य इह भगवतो रूपेषु गुणेषु वा नाना पश्यति

सर्वप्रकारेण भेदं पश्यति, इवशब्दादत्यल्पमेव वा भेदं पश्यति । ''विशेषं योऽत्र पश्यति'' इत्यत्रापि भेदं पश्यतीत्यभिप्रेतत्वात् । स उक्तभेदद्दक् मृत्यनन्तरं मृत्युनामकमन्धन्तमो याति । इवशब्दस्यार्थान्तरमप्याह भेदाभेदं च यः पश्यति सोऽपि तथा तमो याति । एवं तावदनन्तानां भगवद्रूपाणां न कश्चिद् भेद इत्युक्तम् ॥ २.१.१० ॥

**वे.भा-** मायावादिनस्तु यदेवेत्यादिकमेवं व्याचक्षते । ब्रह्मादिस्थावरान्तेषु वर्तमानं तत्तदुपाधिवशादब्रह्मवदवभासमानं संसारि परस्मात् ब्रह्मणोऽन्यदिति शङ्कापरिहारार्थमाह- **यदेवेति** ॥ यदेवेह कार्यकारणोपाधिसमन्वितं संसार-धर्मवदवभासमानं स्वात्मस्थं तदमुत्र नित्यं विज्ञानघनस्वभावं संसारधर्मवर्जितं ब्रह्म यच्चामुत्रामुष्मिन्नात्मनि स्थितं तदेवेह नामरूपकार्यकारणोपाधि-मननुभाव्यमानं नान्यत् । तत्रैवं सत्यविद्यया मोहितः सन् य इह ब्रह्मणि अनानाभूते परस्मादन्योऽहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यति स मृत्योः मृत्युं पुनर्जन्म मरणभावमाप्नोति । तस्मात्तथा न पश्येत् । विज्ञानैकरसं ब्रह्मैवाहमिति पश्येदिति वाक्यार्थः । प्रागेकत्वविज्ञानादाचार्यागमसंस्कृतेन मनसेदं ब्रह्माप्तव्यम् । आत्मैवास्ति नान्यदस्तीति आप्ते तु नानात्व-प्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति । किञ्च नाणुमात्रमपि वस्तु । य इह नानेव पश्यति स मृत्योः मृत्युं गच्छत्येव स्वयमपि भेदमध्यारोपयन्नित्यर्थ इति । तदसत् । चैतन्यैक्यस्याप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेति भावेन श्रुतिव्याख्यानरूपं प्रमाणमेवोदाहरति- **य इति** ॥ अनेन ''यदेवेह तदमुत्र'' इत्येतद्व्याख्यातम् । ''प्रादुर्भावगः'' इत्यनेनेहेत्यस्य भूम्यादावित्यर्थो वक्तव्य इति सूचितम् । तस्यैवार्थान्तरम्- **देहादिषु चेति** ॥ स एवेत्युक्त्या श्रुतावेवकारो भिन्नक्रम इत्युक्तं भवति । चशब्दोऽवधारणार्थः । साक्षादित्यनेन सम्बध्यते । ''यदमुत्र तदन्विह'' इत्येतत् व्याचष्टे- **मूलरूपश्चेति** ॥ आद्यश्चशब्दः प्रकृतत्वानुसन्धानार्थः, द्वितीयोऽवधारणार्थः

स इत्यनेन सम्बध्यते । नन्ववतारादिरूपस्य मूलरूपाभेदे मूलरूपस्यावतारा-भेदः सिद्ध एव । नहि यद्येनाभिन्नं तत्तेन भिन्नमिति शङ्कार्हम् । अतो ''यदमुत्र तदन्विह'' इत्येतद्व्यर्थमिति चेन्न । तथा सति त्वत्पक्षेऽपि वैयर्थ्यापातात् । सङ्घातस्य चैतन्यस्य निर्विशेषचैतन्याभेदे निर्विशेषचैतन्यस्यापि तदभेदस्य सिद्धत्वात् । अस्मत्पक्षे तु इन्द्रार्जुनादिवत्सर्वविशेषाभावज्ञापनार्थत्वेन सार्थक्यात् । अत एवात्यल्पविशेषदर्शिनामप्यनर्थः कथ्यते ''मृत्योः स मृत्युम्'' इत्युत्तरवाक्येनेति भावेन तद्वाक्यं व्याचष्टे- **गुणत इति** ॥ नानेत्यस्यार्थः- **विशेषमिति** ॥ ''क्वचिदन्तरशब्दश्च विशेषस्यैव वाचकः'' इति नानाशब्द-पर्यायान्तरशब्दस्य विशेषवाचकत्वस्मरणात् । गुणतः स्वरूपत इत्यस्य योग्यतया सम्बन्धः । इवशब्दार्थः- **अत्यल्पमिति** ॥ अनेन परमते इव शब्दो व्यर्थः स्यादित्युक्तं भवति । अपिशब्देनाधिकविशेषदर्शिनस्तमो यान्तीति किं वक्तव्यमिति सूचयति । मृत्योर्मृत्युमित्यस्य तात्पर्यम्- **तमोऽन्धमिति** ॥ पुनर्जन्ममरणभावमात्रस्य मिथ्याज्ञानफलत्वायोगात् । एवं यदेवेहेत्यनेना-वतारादिरूपस्य मूलरूपस्य च विशेषशून्यतयाऽत्यन्ताभेदेऽभिहिते किमत्यन्ताभेदेन भेदाभेदः किन्न स्यादित्यतस्तज्ज्ञानिनामनर्थोक्तेरिति भावेन भेदाभेदज्ञानिनामनर्थोक्तिपरतयापि ''मृत्योः स मृत्युम्'' इति वाक्यं व्याचष्टे- **भेदेति** ॥ नानेवेत्यस्यार्थः- **भेदाभेदेति** ॥ अत्रावतारमूलरूपयोः । इदानीं ''मृत्योः स मृत्युं गच्छति'' इति वाक्यं व्याचष्टे- **तथैवेति** ॥ यथा स्वरूपेषु भेदाभेददर्शिनस्तमःप्राप्तिस्तथैवेत्यर्थः । अनेन नानेवेति इवशब्द उपमार्थतयापि व्याख्यातः । तेन विष्णुना एतेषामत्रयवादीनां भेदविच्चेत्यनेन ''एवं धर्मान् पृथक्पश्यन्'' इत्येतदुक्तार्थम् । उभयविदः भेदाभेदविदः ॥२.१.१०॥

**वे.खं-** ''गुहां प्रविश्य तिष्ठन्तं यो भूतेभिः व्यपश्यत'' ''गुहां प्रविश्य तिष्ठन्तीं या भूतेभिः व्यजायत'' इत्यनेन भगवद्रूपाणां भगवता सह भेदप्राप्तावाह- **यदेवेति** ॥ इह भूम्यादौ देहादौ च यद्रूपं वर्तते तदेवामुत्र

वैकुण्ठादावप्यस्ति । अभेदेऽपि इन्द्रार्जुनादाविव ज्ञानादौ विशेषो न मन्तव्य इति भावेनाह- **यदमुत्रेति ॥** यद्रूपं वैकुण्ठादावस्ति । तदेव भूम्यादावस्ति । न तत्र ज्ञानादावत्यल्पेऽपि विशेषो ज्ञेय इति भावः । कुतो न ज्ञेय इत्यतस्तज्ज्ञानिनामनर्थमाह- **मृत्योरिति ॥** य इह मूलरूपावताररूपादौ नानेव अत्यल्पमपि विशेषं पश्यति स मृत्योरनन्तरं मृत्युं नरकमन्धन्तमः प्राप्नोति । ''यदेवेह तदमुत्र'' इतिभगवद्रूपाणामत्यन्ताभेदोक्तिरयुक्ता । भेदाभेदस्यापि सम्भवादित्यतो भगवत्स्वरूपेषु भेदाभेदनिषेधाय तद्दर्शिनां वानर्थमाह- **मृत्योरिति ॥** य इह भगवत्स्वरूपेषु । नानेव नानाशब्दो भेदवाची । ''मुक्तोपसृप्यव्यपदेशात्''(ब्र.सू.१.३.२) इत्यादाविव भावप्रधानत्वात् । इवशब्दस्तु तद्विरुद्धाभेदाभिधायकः । तस्य यद्वाचकशब्द-शिरस्कत्वं तद्विरुद्धाभिधायकत्वस्वाभाव्यात् । तथाच भेदाभेदं पश्यति । स मृत्योर्मृत्युं तमः प्राप्नोति । अतो न तत्र भेदाभेद इत्यर्थः ।। २.१.१० ।।

**वरद-** ''या भूतेभिर्व्यजायत'' इत्यनेन भगवतो नानारूपेण सृष्टिकर्तृत्व-मुक्तम् । न च तेषां रूपाणां परस्परभेदः शङ्कनीय इत्युच्यते- **यदेवेह तदमुत्र इत्यादिना ॥** तद्व्याचष्टे- **य इति ॥** गुणतः स्वरूपत इति अस्य रूपस्यायं गुणोऽस्ति अस्य तु नास्तीति विशेषं पश्यति रूपयोरेव वा विशेषं भेदं पश्यतीत्यर्थः ।। २.१.१० ।।

**रा.खं-** पूर्वं ''गुहां प्रविश्य तिष्ठन्तीम्'' इत्यत्र उक्तमत्स्याद्यवताराणां ब्रह्मादिभूतप्रेरकाणां मूलरूपेण गुणकर्मादिना वा भेदो भेदाभेदो वा नेति महिमान्तरमाह- **यदेवेति ॥** इह देहादिषु यदेवावतारजातमस्ति तदेवामुत्र वैकुण्ठादिलोकेषु मूलरूपतया आस्ते । तयोः कश्चिदपि भेदो नास्ति । इन्द्रार्जुनादाविवावान्तरविशेषोऽपि नेति भावेनाह- **यदमुत्रेति ॥** यदमुत्र मूलरूपमस्ति तदनु तदेवेह देहादिषु स्थितमवतारजातम् । गुणतः स्वरूपतो वा नाणुमात्रं विशेषोऽस्तीति भावः । एतच्चोपलक्षणम् । इहस्थानामपि

रूपाणां नियम्याख्यस्थानभेदेऽपि न भेद इत्यपि ध्येयम् । तथा च सूत्रम्- ''न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि'' (ब्र.सू.३.२.११) इति । कुत एतदित्यतस्तथा पश्यतोऽनर्थस्य सद्भावादित्याह- **मृत्योरिति** ॥ य इह भगवन्मूलरूपावताररूपेषु नाना, भावप्रधानम्, नानात्वं भेदम्, इवशब्दाद् भेदाभेदं वा पश्यति जानाति स मृत्योः मारकात् मृत्युं मरणं तमोलक्षणं प्राप्नोति ॥ २.१.१० ॥

उपनिषत्

**मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।**
**मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ॥ २.१.११ ॥**

भाष्यम्

**भवेदेकत्र संयोग इवशब्दो विरुद्धयोः ।**
**धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते ॥ इति शब्दनिर्णये ॥**

**अतो ''नानेव'' इतीवशब्दोऽत्यल्पविषयो भेदाभेदविषयश्च । प्रथमं ''य इह नानेव पश्यति'' इति स्वरूपभेदनिषेधार्थम् । ''नेह नानाऽस्ति किञ्चन'' इति किञ्चनशब्दादवयवानां गुणानां क्रियाणां च परस्परं तद्वतां च भेदनिषेधार्थम् । भेदाभेद एव निषिध्यते न तु भेद इत्याशङ्कां निवर्तयितुम् ''एवं धर्मान् पृथक् पश्यन्'' इति भगवद्धर्माणामवयवगुण-कर्मणां भेददर्शने पृथग् दोषमाह ॥ २.१.११ ॥**

**व्यास-** करचरणाद्यवयवादिभेदोऽपि नास्तीत्याह- **मनसेति** ॥ इदं तेषां भेदराहित्यं मनसैवाप्तव्यम् । गुणानां भगवता भेदाभावं भेददर्शिनो भेदाभेददर्शिनश्चानर्थोक्त्या समर्थयते- **मृत्योरिति** ॥ २.१.११ ॥

**व्या.भा-** इवशब्दोऽल्पार्थोऽभेदार्थश्च व्याख्यातः । तत्कुत इत्यतः प्रमाणमुदाहृत्य समर्थयते- **भवेदिति** ॥ ''य इह नानेव पश्यति'' ''नेह

नानास्ति किञ्चन'' ''एवं धर्मान् पृथक् पश्यन्'' इति त्रयाणां वाक्यानाम् एकार्थत्वप्रतीतिनिरासायाह- **प्रथममिति ॥** भेदाभेद एव निषिद्ध्यते नतु भेदः । भगवद्धर्माणां भगवता भेददर्शनेनानर्थानुक्तेरित्याशङ्कां निवर्तयितुमिति शेषः ॥२.१.११॥

**वामन** - अथ तदवयवादीनामपि नैव भेदस्तस्येत्याह – **मनसैवेति ॥** इदं भगवद्रूपादिकं मनसैव वेदार्थं विचार्य ज्ञातव्यम् । अतिसूक्ष्मत्वात् । ''तथैवावयवानां च'' इत्यादिना ''नेह नाना'' इत्यादेरभिप्रायं स्पष्टयति । अत्रायं विशेषः ''भेददर्श्यधरं तमः । भेदाभेदप्रदर्शी च तम एवोत्तरं व्रजेत्'' इति श्रुत्यन्तरात् तमस्यपि विशेषो बोद्धव्यः । इवशब्दस्तु एवमर्थं कथं वक्तीत्याशङ्क्याऽऽह- **भवेदेकत्रेति ॥** विरुद्धयोः धर्मयोः एकत्र वस्तुनि संयोगेन स्थितौ इवशब्दः तद्वाचकः भवेत् । एवमुपमास्वल्पत्वयोरपि भवेत् । इवशब्दार्थं निगमयति- **अत इति ॥** ''य इह नानेव पश्यति'' इत्यत्र पठ्यमान इवशब्दः भेदाभेदविषयः, चशब्दात् अत्यल्पार्थविषयश्च भवति । ''य इह नानेव पश्यति'' इति मत्स्यादिस्वरूपभेदनिषेधः पूर्वत्र क्रियते । ''यदेवेह तदमुत्र'' इति तन्मात्रप्रस्तावात् । उत्तरत्र किञ्चनेति विशेषणात् अवयवाद्यशेषभेदनिषेध इति विषयविभागः । विधान्तरेण पुनरुक्तिमुद्भाव्य परिहरति- **भेदाभेद एवेति ॥** नानेवेत्युक्त्या भेदाभेदपक्ष एव निषिद्ध्यते नतु भेदपक्षोऽपीत्यतिशङ्का स्यात् । तामपि निवर्तयितुं ''एवं धर्मान्'' इत्युत्तरवाक्ये भगवद्धर्मादीनां भेददर्शनेऽपि समुच्चयपक्षात् पृथग् दोषमाह ॥ ॥ २.१.११ ॥

**वे.भा**- एवं नानेवेतीवशब्दोऽल्पार्थ उपमार्थो भेदाभेदार्थश्च व्याख्यातः । तत्कुत इत्यतः सप्रमाणकं तत्समर्थयते- **भवेदिति ॥** विरुद्धयोर्धर्मयोः संयोगे विवक्षिते एकविरोधिवाचकशब्दस्योपरि इवशब्दो भवेदित्यर्थः । उपमायां विवक्षितायां नानेवेतीवशब्दः नानाशब्दशिरःस्थ इवशब्द इत्यर्थः ।

चशब्दादुपमाद्यर्थश्चेति समुच्चिनोति । किञ्च यदेवेहेत्यनेनैव जीवब्रह्मभेदस्य निषिद्धत्वात्तत्पक्षे "नेह नाना" इति वाक्यं व्यर्थं स्यात् । ननु भवत्पक्षेऽपि व्यर्थं "यदेवेह" इत्यनेनात्यन्ताभेदमुक्त्वा तत्र भेदाभेददर्शिनामनर्थोक्त्या भेदनिषेधस्य प्रागेव जातत्वादित्यतः पूर्वोत्तरवाक्यतात्पर्यमाह- **प्रथममिति** ॥ भगवत्स्वरूपाणां मूलरूपावतारादिरूपाणां भेदनिषेधार्थमित्यर्थः । तदवयवादीनां भेदनिषेधोऽत्र क्रियत इति कुतः ज्ञापकाभावादित्यत उक्तम्- **किञ्चनशब्दादिति** ॥ किञ्चनशब्दस्य सर्वनामत्वेन प्रकृतवाचित्वात् । "आसीनो दूरं व्रजति शयानः" इत्यादिनावयवानां "महान्तं विभुमात्मानम्" इत्यादिना गुणानां "यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत" इत्यादिना कर्मणाञ्च प्रकृतत्वादिति भावः ॥ **भेदनिषेधार्थमिति** ॥ इह ब्रह्मणि किञ्चन प्रकृतमवयवादिकं नाना भिन्नं नास्तीत्युक्तेऽवयवादीनां भेद एव निषिध्यते । "सविशेषणे हि..." इति न्यायात् । "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" "न जीर्णमलवद्वासाः स्नातकः स्यात्" इत्यादौ दर्शनाच्च । अन्यथा धर्माणां स्वरूपत एव निषेधे नानेति व्यर्थं स्यादिति भावः ॥

ननु यदि "नेह नाना" इति वाक्यं भगवदवयवादिधर्माणां भेदनिषेधार्थं तर्हि "एवं धर्मान्" इति वाक्यं व्यर्थं स्यात् । तत्राप्यवयवादिधर्माणां भेददर्शिनामनर्थोक्त्या तन्निषेधादित्यत आह- **भेदेति** ॥ अवयवानामित्यारभ्य तद्वतां चेत्यन्तमत्रानुवर्तते । "मृत्योस्स मृत्युं गच्छति" इत्यत्रावयवादीनां भेदाभेद एव निषिध्यते । तद्दर्शिनामेवानर्थोक्तेः । नतु भेदः । तद्दर्शिनामनर्थानुक्तेः । तथाच "नेह नाना" इति भेदनिषेधप्रतिज्ञा अनुपपन्नेत्याशङ्कां निवर्तयितुमित्यर्थः ॥ २.१.१०-११ ॥

**वे.खं-** इदञ्च स्वमनस्येव स्थापनीयं नान्यस्मै ब्रूयादित्याह- **मनसैवेति** ॥ यद्वा "तं देवाः सर्वे अर्पिताः" इत्युक्तभगवत्प्राप्तिसाधनं किमित्यत आह- **मनसेति** ॥ श्रवणादिसंस्कृतेन मनसेत्यर्थः । न केवलं भगवदवतारादीनामेव

भगवता भेदाभावः किंनाम प्रागुक्तभगवदवयवगुणकर्मादीनामपि परस्परं भगवता च भेदो नास्तीत्याह- **नेति** ॥ इह ब्रह्मणि किञ्चन अवयवगुणकर्मादिकं परस्परं भगवता च नाना भिन्नं नास्तीत्यर्थः । इह ब्रह्मणि किञ्चन अवयवादिप्रयुक्तं नाना नानात्वं भेदो नास्तीत्यर्थः । ननु कुत एवं भगवदवयवादीनां परस्परं भगवता च भेदाभावः घटादाविवाभेदेऽपि भेदः किन्न स्यादित्यतो भेदाभेदज्ञानिनामनर्थमाह- **मृत्योरिति** ॥ इवशब्द उपमायामपि वर्तते । यथा भगवत्स्वरूपेषु भेदाभेदज्ञानी तमः प्राप्नोति तथैव य इह भगवदवयवगुणकर्मादिषु परस्परं भगवता च नानेव भेदाभेदं पश्यति स मृत्योः मृत्युं तमो गच्छति । अतो न तत्र भेदाभेद इत्यर्थः ॥२.१.११॥

**वरद-** एवं भगवद्रूपाणां परस्परभेदं निषिद्ध्य तद्गुणकर्मादीनामपि तेन सह भेदो निषिद्ध्यते- **मनसैवेदमाप्तव्यमिति** ॥ तद्व्याचष्टे- **तथैवेति** ॥

"अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम्" इत्यत्राल्पं नानात्वं भेदाभेदश्चेत्युभयं "य इह नानेव पश्यति" इत्यत्र एवशब्देन विधीयते इत्युक्तम् । इदानीमिवशब्दस्य तदर्थत्वं कुत इत्यतस्तत्र नियामकमाह- **भवेदिति** ॥ इवशब्दस्यास्तु भेदाभेदाद्यर्थत्वं तथा च किन्नु प्रकृत इत्यत आह- **अत इति** ॥ ईषद्भेदविषयश्चेति चशब्दस्यार्थः । "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिस्थानत्रयेऽप्यनर्थ उच्यते स किं भेददर्शिन एव उतान्यस्यापीत्यतः तद्विविच्य दर्शयति- **प्रथममित्यादिना** ॥ रूपाणां भेदनिषेधानन्तरमपि किञ्चन नाना नास्तीति किञ्चनशब्द-प्रयोगात्तेन परमात्मना गुणक्रियादीनां भेदो निषिद्ध्यत इति ज्ञायत इत्यर्थः । एवञ्चेत् "एवं धर्मान्पृथक्पश्यन्" इत्यत्रोक्तोऽनर्थः कस्येत्यत आह- **भेदाभेदेति** ॥ २.१.११ ॥

**रा.खं-** भगवद्रूपाणां भेदादिर्नेत्युक्त्वा स्वावयवगुणकर्मभिः भेदादिर्नेत्याह- **मनसैवेति** ॥ इह मूलरूपे अवताररूपेषु वा किञ्चन गुणकर्मादिकं नाना

भिन्नं नास्ति । तदाह उभयव्यपदेशादिति नये ''प्रतिषेधाच्च (ब्र.सू.३-२-३१)'' इति सूत्रकारः । इदं रूपादिषु भेदादिकं नेत्येतत् प्रमेयं मनसैव मननसमर्थेनैव अन्तःकरणेनैवाऽऽप्तव्यं ज्ञातव्यम् । न तु भेदकार्यव्यवहारादि-हेतुबलेनापलपनीयम् । कुत एवमित्यतोऽन्यथा पश्यतोऽनर्थसत्त्वादित्याह- **मृत्योरिति ॥** नानेवेतिभिन्नं भिन्नाभिन्नं वा । इह गुणकर्मादिषु । अतो न पूर्वेण पौनरुक्त्यम्, तस्य स्वरूपविषयत्वादस्य च गुणकर्मावयवविषयत्वात् ॥ ॥२.१.११॥

## उपनिषत्

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद् वै**
**तत् ॥ २.१.१२ ॥**

**व्यास-** गुहास्थितिप्रकारमेव विवृण्वन् गुणान्तरमाह- **अङ्गुष्ठेति ॥** २.१.१२ ॥

**वामन -** एवं निर्भेदानन्तगुणक्रियादिस्वरूपो भगवानङ्गुष्ठमात्रतया जीवात्मनि हृदयमध्ये तिष्ठति ॥ २.१.१२ ॥

**वादि-** एतत् सूर्यपदोपलक्षितसकलदेवसृष्टिसंहारकारकं भूतभव्येशानं सकलजीवहृदि अङ्गुष्ठमात्रतया स्थितं प्रागुक्तरीत्या सर्वेभ्यः पूर्वं चतुर्मुखस्यैव स्रष्टृ ब्रह्मस्वरूपं तद्वै मुक्तजीवहृदि स्थित्वा मुक्तनियामकं वै । अत्रापि वैशब्दः पूर्ववद्युक्तिसूचनार्थः । ''नेक्षेतोद्यन्तमादित्यम्'' (म.भा.अनु.१६१.१७) इतिवत् ''इह नानेव पश्यति'' इत्यपि मूलावताररूपादीनां भेददर्शिनो निन्दैव क्रियते, न तु भेदाभावेऽपि तात्पर्यमिति शङ्कावारणाय श्रुतिः स्वयमेव ''नेह नानाऽस्ति किञ्चन'' इत्याह । इह ब्रह्मणि किञ्चन अवतारावयव-धर्मादिकं नाना नानाभूतं नास्ति हीत्यर्थः । तस्मात् सूर्योदयदर्शनादीनामिव निषिद्धत्वादेव न दर्शनमात्रनिन्दा । किन्त्वविद्यमानशुक्तिरजतादिदर्शनस्य

भ्रान्तित्वेन निन्दावदियमपि मिथ्याज्ञानत्वादेव निन्देत्युक्तं भवति ॥२.१.११-१२ ॥

**वे.खं-** किञ्च अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणः । हृद्यवकाशापेक्षया अङ्गुष्ठमात्रत्वोक्तिः । पुरुषः पूर्णषड्गुणः आत्मनि मध्यदेहे हृद्गुहायां तिष्ठति । ईशान इत्याद्युक्तार्थम् ॥२.१.१२॥

**रा.खं-** ''गुहां प्रविश्य तिष्ठन्तीम्'' इत्यत्रोक्तनियामकरूपाणां नियम्य-भूतस्थानभेदप्रसक्तं भेदं निरस्य इदानीं गुहास्थस्योपासनार्थं परिमाणविशेषमाह- **अङ्गुष्ठमात्र इति** ॥ कथमपरिच्छिन्नस्य तन्मात्रत्वमित्यत आह- **मध्य आत्मनीति** ॥ आत्मनो देहस्य जीवस्य वा मध्ये हृदये तिष्ठतीत्युक्त्या हृदयस्य तत्तदङ्गुष्ठपरिमितत्वात्तत्रस्थोऽपि तथोपचर्यते । स्थानैक्येन ''गोष्ठे गावः एकीभूताः'' इतिवदिति वा, तन्मात्रपरिमाणाभिव्यक्त्या वा तथोच्यत इति भावः । तदुक्तं सूत्रे- ''हृद्यपेक्षया तु मनुष्याधिकारत्वात्'' (ब्र.सू.१-३-२५) इति । पुरुषो जीव इति भ्रमनिरासाय गुणान्तरमाह- **ईशान इति** ॥ भूतभव्यस्येत्यत्र द्वन्द्वैकवद्भावः । भूतभाविनोः प्रेरकः । ततः हृदयस्थस्य प्रेरकत्वादेव तज्ज्ञानी न विजुगुप्सते आत्मानं गोप्तुं नेच्छति । आत्मरक्षार्थं न प्रयतते । एतद्वै तत् त्वया पृष्टं वस्तु एतद्वै । यदेवेहेत्यादिनोक्तगुणकं वै इति ॥ ॥२.१.१२॥

उपनिषत्

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद् वै**
**तत् ॥ २.१.१३ ॥**

**व्यास-** उक्तमनुवदन् गुणान्तरमाह- **अङ्गुष्ठेति** ॥ श्वोऽपि स उ स एव नित्य इत्यर्थः ॥ २.१.१३ ॥

**वामन** - अधूमक इति ज्योतिर्मयस्य हरेः सर्वदोषहीनत्वोपलक्षणम् । भूतभव्येशानत्वं तु "स एवाऽद्य स उ श्वः" इति मुख्यत एव अनाद्यनन्त-नित्यत्वाद्युज्यते । अङ्गुष्ठमात्रः सर्वेशानश्चेति पूर्वोक्तविशेषणमनूद्य उत्तरत्र ज्योतिर्मयत्वं नित्यत्वं चास्य विधीयत इत्यपुनरुक्तिः ॥२.१.१२–१३॥

**वे.खं-** धूमानावृताग्निरिव प्रकाशस्वरूप इत्यर्थः । स एवाद्य वर्तते स एव श्वोऽपि वर्तिष्यते । अनाद्यनन्तकालेऽपि सदा वर्तत इत्यर्थः ॥ २.१.१३ ॥

**रा.खं-** उक्तानुवादेन गुणान्तरमाह- **अङ्गुष्ठेति** ॥ अधूमकः निर्मलः । स एवाद्य, स उ श्वः स एव श्वः । अनादिनित्य इत्यर्थः । एतद्वै तदिति प्राग्वत् ॥ ॥२.१.१३ ॥

उपनिषत्

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान् पृथक् पश्यंस्तानेवानु विधावति ॥२.१.१४॥**

भाष्यम्

**पर्वतेषु दुर्गे शिखरे वृष्टमधो विधावति । एवं विष्णोर्धर्मान् पृथक् पश्यन्नन्धन्तमो विधावति ॥२.१.१४ ॥**

**व्यास-** भगवद्गुणानां भगवता भेदाभेददर्शिनोऽनर्थमाह- **यथोदकमिति** ॥

**व्या.भा-** "यथोदकम्" इति वाक्यमन्वयाप्रतीतेः व्याचष्टे- **पर्वतेष्विति** ॥ शिखरे वृष्टमुदकं यथेति पूरणीयम् । एवं विष्णोः धर्मान् ततः पृथक् पश्यन् तानेव पृथग्दृष्टान् तानन्वेव अनन्तरमेव अध इति च पूरणीयम् ॥२.१.१४॥

**वामन** - यथोदकमित्येतद् व्याख्याति– **पर्वतेष्विति** ॥ अत्युच्चतया दुरारोहतया दुर्गमिति विवक्षितम् । तानेवानु विष्णुधर्मान् पृथग्दृष्टानन्वेव । तथा दृष्ट्यनन्तरमेवेत्यर्थः ॥ २.१.१४ ॥

**वादि-** ''एवं धर्मान् पृथक्पश्यन् तानेवानुविधावति'' इत्यत्र एवं पूर्वोक्तमिथ्याज्ञानिवत् धर्मान् पृथक् पश्यन् पुरुषस्तान्मिथ्याबोधाननु अनुसृत्य विधावति विविधतया अन्धन्तमसि धावति । कलिमारभ्य मनुष्याधमपर्यन्तं मिथ्याज्ञानेऽपि तारतम्यसद्भावादन्धन्तमसि तारतम्येन दुःखमनुभवतीति भावः । मिथ्याज्ञानमतिदृढं चेदन्धे तमस्येव धावति । मिश्रजीववददृढं चेत्, कदाचिदस्ति कदाचिन्नास्ति चेत् अधमजीवाद्विलक्षणं मध्यमगतौ धावति ।

अधुना मुक्तजीवानां ब्रह्मण्यैक्यमिति मतं स्पष्टं निषेद्धुमाह- **यथोदकमिति** ॥ यथा शुद्धमुदकं शुद्धे आसिक्तं तादृगेव भवति । नतु तदेव भवति । पङ्किलोदकस्य तादृशत्वाभावाच्छुद्धमित्युक्तम् । प्रत्यक्षत एव वृद्धेः दृश्यमानत्वात् । ब्रह्मकमण्डलुस्थगङ्गागोदाकावेर्युदकानां मेलनेऽपि भेददर्शनाच्च । एवं विजानतो मुनेरात्मा स्वमी चतुर्मुखात्मा मुख्यप्राणः लिङ्गशरीरभङ्गेन स्वयमपि शुद्धः सन् शुद्धे ब्रह्मणि सायुज्यमोक्षभोक्तृतया शुद्धे ब्रह्मणि संसक्तोऽपि तादृगेव भवति । नतु तदेव भवति । तत्रापि ''ऋचां त्वः पोषमास्ते'' (ऋ.सं.१०.७१.११) इत्यादिना भेददर्शनात् । अथवा विजानतो मुनेः, जात्येकवचनम्, आत्मा स्वरूपमपि लिङ्गदेहभङ्गानन्तरं शुद्धे ब्रह्मणि विमिश्रमपि तादृगेव भवति, नतु तदेव भवतीत्यर्थः ॥२.१.१४॥

**वे.भा-** एवं धर्मान् इति वाक्यस्योक्ततात्पर्यकत्वाप्रतीतेः कथमेतदित्यतः ''यथोदकम्'' इति दृष्टान्तवाक्यव्याख्यानपूर्वकं तद्व्याचष्टे- **पर्वतेष्विति** ॥ अनेन धर्मदर्शिनामनर्थोक्त्या धर्मनिषेध एवात्राभिप्रेत इत्यसदित्युक्तं भवति । पृथगित्यस्य वैयर्थ्यापातात् ॥२.१.१४॥

**वे.खं-** ननु ''मृत्योः स मृत्युं गच्छति'' इत्यनेन भगवदवयवादीनां भगवता परस्परञ्च भेदाभेद एव निषिध्यते । नतु भेदः । तद्दर्शिनामनर्थानुक्तेः । अतो ''नेह नाना'' इति कथं भेदाभाव उक्त इत्यतो भेददर्शिनामप्यनर्थं वक्तुं

प्रतिजानीते- **यथेति** ॥ यथा पर्वतेषु दुर्गे शिखरे वृष्टमुदकं अधो विधावति । एवं विष्णोः धर्मान् पृथक् विष्णुना परस्परञ्च भेदेन पश्यन् तानेव पृथग्दृष्टधर्मानेव धर्मपार्थक्यदर्शनानन्तरमेवेति यावत् । विधावति अन्धन्तम इत्यर्थः ॥२.१.१४॥

**वरद-** "मृत्योस्स मृत्युमाप्नोति" इत्यत्रानर्थकथनेन गुणक्रियादीनां भगवता भेदाभेद एव निषिद्ध्यते । नतु गुणादीनां भगवत्प्रतियोगिकभेददर्शने कश्चिदनर्थ उक्तः । अतो गुणादीनां भगवता भेद एवेत्ययं पक्षः साधीयानेवेति कस्यचिच्छङ्का स्यात्तन्निवर्तयितुं "एवं धर्मान्" इति तृतीयानर्थकथनमित्यर्थः । एवं "एवं धर्मान्" इत्यस्य सङ्गतिमुक्त्वा अथ तद्व्याचष्टे- **पर्वतेष्विति** ॥

**रा.खं-** किञ्चनेति वाक्यशेषे नानेति नानाशब्देन भेदस्य, इव शब्देन तद्विरुद्धस्याभेदस्य प्रतीत्या भेदाभेददर्शिन एवानर्थोक्तेर्भेददर्शिनस्तदनुक्तेः भेद एवास्तु धर्माणामित्यतो धर्माणां भेदज्ञाने अनर्थं स्पष्टयति- **यथेति** ॥ पर्वतेषु दुर्गे ऊर्ध्वभागे शिखरे वृष्टमुदकं यथा अधो विविधतया धावति गच्छति एवं विष्णोर्धर्मान् पृथक् आश्रयादन्योन्यं वा भेदेन पश्यन् जानन् तानेव भेदेन दृष्टाननु तद्दर्शनानन्तरमेव विधावति तमः प्राप्नोति ॥ २.१.१४ ॥

**उपनिषत्**

**[1]यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ॥ २.१.१५ ॥**

**॥ इति द्वितीयाध्यायस्य प्रथमा वल्ली ॥**

---

१. उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।
नचैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥
एवमेव हि जीवोऽपि तादात्म्यं परमात्मना ।
प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणात् ॥
ब्रह्मेशानादिभिर्देवैः यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरे ॥ इति च स्कान्दे ॥ सू.भा. २.१.१४ ॥

## भाष्यम्

**विजानतो मुनेरात्मा वायुरपि तादृगेव भवति न तु स एव भवति । किम्वन्ये जीवाः ॥**

**'सर्वेषां ज्ञानिनामात्मा देवानां च विशेषतः ।**
**मुक्तो वायुश्च सादृश्यमेवं विष्णोस्तु गच्छति ॥**

**न तु तद्रूपतां याति किम्वन्ये देवमानुषाः ।**
**आभासाभासरूपास्तु वायोर्देवस्य सर्वशः ॥**

**इति भविष्यत्पर्वणि ॥ २.१.१५ ॥**

**॥ इति काठकभाष्ये द्वितीयाध्यायस्य प्रथमा वल्ली ॥**

**व्यास-** मुक्तस्येश्वरो नियामक इत्ययुक्तम्, तस्य ब्रह्मणि प्रवेशेनैक्यादित्यतः कैमुत्यमाह- **यथोदकं शुद्ध इति** ॥ २.१.१५ ॥

**व्या.भा-** विजानतो मुनेरात्मा स्वामी क इति न ज्ञायतेऽतो व्याकरोति- **विजानत इति** ॥ अवधारणार्थं व्यनक्ति- **नत्विति** ॥ वायुः सर्वेषां ज्ञानिनां स्वामी विमुक्तोऽपि स भगवत्सादृश्यमेव यातीति च कुत इत्यत आह- **सर्वेषामिति** ॥ वायोर्भगवदैक्याभावेऽन्येषां भगवदैक्याभावः कस्मादित्यतः परम्परया तदधीनप्रतिबिम्बत्वादित्याह- **आभासाभासरूपा इति** ॥२.१.१५॥

**वामन** - मुक्तजीवस्यापि परमात्मन्येकीभावोक्तेः पृथङ् न स द्रष्टव्य इत्यत आह– **यथोदकमिति** ॥ ‘‘तादृगेव भवति’’ तत्सदृशमेव भवति । एवं मुक्तसङ्घोऽपि निर्दोषत्वादिधर्मैः विष्णुसदृश एव भवति । नतु तदभिन्नो भवति । एकीभावोक्तिः स्थानैक्यादिविवक्षयैव । ‘‘ब्रह्म प्रधानमुपयान्त्यगताभिमानाः’’(भाग.३.३३.१०) इति वचनात् । ‘‘उपसङ्क्रामति’, ‘‘साम्यमुपैति’’ इत्यादिभिश्च । एतमर्थं ‘‘सर्वेषाम्’’ इत्यादिना भविष्यत्पर्ववचनेन दृढयति ॥
॥२.१.१५॥

**वे.भा-** विजानतो मुनेरात्मा स्वरूपमेवं ब्रह्माभिन्नं भवतीति निरासाय ''एवं मुनेर्विजानत आत्मा भवति'' इत्येतद्व्याचष्टे- **विजानत इति ॥** आत्मा स्वामीत्यर्थः । तादृगेवेत्यनेन दृष्टान्तवाक्यस्थं तादृगिति पदमत्र अनुवर्तत इत्युक्तं भवति । एवकारव्यावर्त्यमाह- **नत्विति ॥** वायुरपीत्यध्याहृतापिशब्दसूचितकैमुत्यमाह- **किम्वन्य इति ॥** अन्ये जीवास्तादृशा एव भवन्ति । नतु स एव भवतीति किमु वक्तव्यमित्यर्थः । वायोः संसारितया सादृश्यमात्रप्राप्तावपि मुक्तस्य तदैक्यप्राप्तिः किन्न स्यादित्याशङ्कां परिहरन् श्रुतेः स्वकृतं व्याख्यानं प्रमाणेन दृढयति- **सर्वेषामिति ॥** अत्र बहुवचनश्रवणाद्विजानत इत्येकवचनं समुदायाभिप्रायम् । वायुर्ब्रह्मा । चशब्दोऽपिशब्दार्थः । वायोस्तद्रूपत्वाभावेऽपि अन्येषां तत्किन्न स्यादित्यत आह- **आभासेति ॥** केचन साक्षादाभासाः केचनाभासाभासा इत्यर्थः॥

॥२.१.१५॥

**वे.खं-** ननु यथा भगवत्स्वरूपाणां भगवता भेदाभावस्तथा मुक्तानामपि भगवता भेदाभावः किन्नेत्याह- **यथेति ॥** हे गौतम यथा शुद्धे उदके आसिक्तं शुद्धमुदकं तादृगेव भवति नतु तदेव । अन्यथा वृद्धिदर्शनासम्भवात् । एवं विजानतो मुनेरात्मा स्वामी वायुरपि मुक्तः सन् तादृगेव भगवत्सदृश एव भवति । नतु स एव । किमन्ये जीवा इत्यर्थः ॥२.१.१५॥

**वरद-** ननु मुक्त्यनन्तरं मुक्तानां भगवत्प्रतियोगिकभेदाभावान्मुक्तावपि भगवन्नियामकत्वेनावशिष्यते इत्येवं न युज्यत इत्याशङ्क्योच्यते- **यथोदकमिति ॥** तत्र विजानतो मुनेरात्मा क इत्यत आह- **विजानतो मुनेरिति ॥** अत्रैव प्रमाणश्चाह- **सर्वेषामिति ॥** आत्मा स्वामी । वायोरैक्याभावे अन्येषामैक्यं कुतो न भवेदित्यत्राह- **आभासेति ॥**

॥२.१.१५॥

**रा.खं-** ननु ईश्वरस्य कथं प्रेरकत्वम् ? मुक्तस्य तदनुप्रवेशेन तेनैक्यादित्यतो नैवमित्याह- **यथेति** ।। यथा शुद्धमुदकं शुद्धोदके सिक्तं स्थापितं सत् तादृगेव भवति, नतु तदेव, वृद्धिदर्शनात् । विजानतो मुनेः विजानतां मुनीनामात्मा स्वामी मुक्तश्चतुर्मुखः एवं भवति भगवत्सदृश एव भवति । न तु तदैक्यमाप्नोति । जीवास्तु नाऽप्नुवन्तीति किमु वक्तव्यमित्यर्थः । अत उक्तं युक्तमिति भावः । गौतमेति नचिकेतसः सम्बोधनम् ।।२.१.१५।।

**।। इति द्वितीयाध्यायस्य प्रथमा वल्ली ।।**

# अथ द्वितीयाध्यायस्य द्वितीया वल्ली

## उपनिषत्

**पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद् वै तत् ॥ ॥२.२.१॥**

## भाष्यम्

**इदं पुरं भगवदधीनमित्यधिष्ठाय अजस्येदं पुरमिति स्थितिं कृत्वा ।**

**विमुक्तो निरभीमानात् पूर्वमेवापरोक्षवित् ।**
**मुख्यतो मुच्यते पश्चाद् दुःखाद्याभासहानतः ॥**

**इति च ॥ २.२.१ ॥**

**व्या-** मुमुक्षुर्देहादिषु ममत्वं जह्यात् तेषां भगवदधीनत्वादित्याह- **पुरमिति** ॥ एकादशद्वारं पुरमधिष्ठाय न शोचति चेदस्माकमपि तदधिष्ठितत्वाच्छोकाभावः स्यादिति शङ्कानिरासायापेक्षितं प्रक्षिप्य योजयति- **इदमिति** ॥ ननु तत्र भगवद्वाचकपदाभावात्कथमेवं व्याख्येति शङ्कां ज्ञापकोक्त्या परिहरन् अधिष्ठायेत्यस्यार्थमाह- **अजस्येति** ॥ स्थितिं निश्चयम् । एवं निश्चयेऽपि कथं शोकाभाव इत्यत आह- **विमुक्तश्च विमुच्यत इति** ॥ बन्धस्यापरमार्थत्वात्पूर्वमपि विमुक्त एव विद्यया तत्प्रतिभासनिवृत्तौ विमुच्यत इति प्रतीतिनिरासाय तद्व्याचष्टे- **विमुक्त इति** ॥ अपरोक्षवित् देहादौ निरभिमानात् पूर्वमपि विमुक्तः पश्चान्मुच्यते इत्यादि योज्यम् ॥२.२.१॥

**वामन-** हृदिस्थस्य विष्णोरित्थम्भावान्तरमप्याह– **पुरमित्यादिना** ॥ एतद् वाक्यं व्याख्याति– **इदं पुरमिति** ॥ अभिप्रायं वक्ति– **अजस्येति** ॥ अजस्य हरेः निवासार्थं इदं शरीरं स्थितमिति मानसस्थितिं कृत्वा, मनसा निश्चित्य, उपास्येत्यर्थः । न शोचतीत्यन्वयशेषः । सुषुम्नानाडीसहितमेकादशद्वारम् । पूर्वं

विमुक्तस्य पश्चाद् विमुक्तिः कथं स्यादित्यत आह– **विमुक्त इति** ॥ अपरोक्षविवक्षया मुक्तेः पूर्वमेव भगवदधीनत्वेन निर्णीते देहादौ निरभिमानत्वात् अनिष्टकर्मापक्षयाच्च जीवन्मुक्त्यपेक्षया विमुक्तो भवति । पश्चात् लिङ्गशरीरभङ्गे दुःखाद्याभासहानेन मुख्यत एव मुच्यते । इति च भविष्यत्पर्वणि ॥२.२.१॥

**वादि-** अवक्रचेतसः अजस्य पुरमधिष्ठाय जीवो न शोचति चेत् सर्वस्यापि शोको न स्यात् । तादृशदेहाधिष्ठितत्वस्य सकलजीवसाधारणत्वादिति शङ्कावारणाय शेषं पूरयित्वा व्याख्याति- **इदं पुरमिति** ॥ इदं परिदृश्यमानम् । अहरहः स्वानपेक्षितनानाविधक्लेशदायकत्वेनानुभूयमानमिति यावत् । पुरं शरीरं भगवदधीनमित्यधिष्ठाय दिने दिने नियमेनानुचिन्त्य एकादशद्वारं एकादशेन्द्रियस्थानाख्यद्वारयुक्तं पुरं शरीरमवक्रचेतसः अजस्य वशे अधिष्ठाय स्थितमिति निश्चित्य न शोचति । अत एव ममायं देह इत्यभिमानाद्विमुक्तो जीवः विमुच्यते मुक्तो भवति । एवं पराधीनजीवनियामकतया निश्चितं यत् परं ब्रह्म एतत् तद् वै मुक्तनियामकतया तस्मिन्नपि स्थितं वै । तर्ह्यजस्य वशे स्थितमित्यधिष्ठाय निश्चित्येत्यर्थ एव वक्तव्यः । अध्याहारः किमर्थ इति चेत् सत्यम् । स्वाधीनतयाऽभिमन्यमानदेहस्येश्वरवशत्वनिश्चय एव कथं स्यादित्यध्याहार इति परिहारसम्भवात् ॥२.२.१॥

**वे.भा-** "पुरमेकादशद्वारम्" इत्यस्यैकादशद्वारमिदं शरीराख्यं पुरमवक्रचेतसः अजस्य ब्रह्मण एव । यस्येदं शरीरं तं पुरस्वामिनं परमेश्वरं अनुष्ठाय ध्यात्वा न शोचतीति व्याख्यानमसत् । शरीरस्य जीवाभिमततया जीवपुरत्वेन ब्रह्मपुरत्वाभावात् । जीवब्रह्मैक्यस्य बाधितत्वात् । यस्येदं शरीरं तं पुरस्वामिनमित्यध्याहारप्रसङ्गाच्च । सम्भवत्येकवाक्यत्वे वाक्यभेदकल्पनायोगाच्चेति भावेन तद्वाक्यमितिशब्दाध्याहारेण यथावद्व्याचष्टे- **इदमिति** ॥ ननु भगवदधीनमित्यस्यार्थस्य श्रुतावदर्शनात्कथमेवं व्याख्यानमित्यतस्त-

केषाञ्चिद्योग्यानां पूर्वं भगवदाधिक्यज्ञानानुपलम्भेऽपि पश्चात्तद्दर्शनात्कथमेतदित्यत आह- **अभिभूतमिति** ।। अभिभवकृतोऽनुपलम्भ इति भावः ।।
।।२.३.१३।।

**वे.खं-** यत एवमनाधिक्यं जानतां भगवज्ज्ञानाभावः अतो भगवानस्तीत्येव सतः सर्वस्मादधिक इत्येवोपलब्धव्यः । सा चोपलब्धिर्भगवत्प्रसादादेवेत्याह- **तत्त्वभावेनेति** ।। उभयोः प्रकृतिपुरुषयोस्तत्त्वं भावयतीति तत्त्वभावो विष्णुस्तेन तत्त्वभावेन प्रसन्नेन विष्णुनैवास्तीत्युपलभ्यत इति शेषः । विष्णुप्रसादसाध्यभगवदाधिक्यज्ञानवतः फलमाह- **अस्तीति** ।। भगवान् अस्तीत्येवोपलब्धस्योपलब्धिमतस्तत्त्वभावो विष्णुर्विशेषतः प्रसीदति ।।२.३.१३।।

**वरद-** ''अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः'' इति । तस्यार्थः- **प्रकृतेः पुरुषाणाश्चेति** ।। परमेश्वरस्यास्तित्वज्ञानस्य फलमुच्यते- **अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदतीति** ।। उपलब्धस्येति उपलब्धिमत इत्यर्थः । प्रसादेन किं भवतीत्याह- **तत्प्रसादादिति** ।। तद्विष्णोः प्रसादात् तस्य विष्णोः प्रसादात् तस्यैव विष्णोः सत्तः सर्वस्मादपि सतः, आधिक्यं ज्ञायते । तथाविदः सर्वस्मादपि सतो विष्णोराधिक्यविदः पुनरपि विष्णोः प्रसादो भवति । नन्वेवं सत्यन्योन्याश्रयत्वं स्यात् । प्रसादादाधिक्यज्ञानं भवति, आधिक्यज्ञाने सति प्रसादो भवतीत्यङ्गीकारादित्यतो नान्योन्याश्रयः । व्यक्तिभेदाङ्गीकारादित्याह- **अनादीति** ।। अनादिकालमारभ्य सामान्याकारेण सर्वस्मादपि विष्णोराधिक्यं जानतः पुरुषस्य प्रसादद्वारा सर्वोत्तमत्वज्ञानं पुनः पुनरभिवृद्धिमेतीति नान्योन्याश्रय इत्यर्थः । नन्वनादिकालादिति किमर्थम्? पूर्वं सामान्याकारेण विष्णोः सर्वोत्तमत्वज्ञानरहितस्यापि पश्चात्तद्विषयज्ञानं भविष्यतीति किन्न स्यादित्यत आह- **येषामिति** ।। ननु मोक्षे योग्यानां केषाञ्चित् पूर्वमसदपि विष्णोः सर्वोत्तमत्वज्ञानं पश्चादुपजायत एव अतो नायं नियम इत्यत आह- **अभिभूतमिति** ।।२.३.१३।।

**वरद.खं-** न केवलमस्तीति ज्ञानेनालं किन्तु सर्वसृष्टिकर्तृत्वेन च ज्ञातव्यमित्याह- **अस्तीत्येवोपलब्धव्य इति ॥** तद्ब्रह्मास्ति सर्वस्मादपि उत्तमः चेतनाचेतनतत्त्वभावकश्चेत्युपलब्धव्यं ज्ञातव्यमित्यर्थः । अस्तीतिज्ञाने किं फलं भवतीत्यत आह- **अस्तीति ॥ उपलब्धस्येति ॥** उपलब्धिमत इत्यर्थः । तत्त्वं भावयतीति तत्त्वभावो भगवान् ॥२.३.१३॥

**रा.खं-** सेतिकर्तव्यताकश्रवणादिस्वप्रयत्नमात्रादेव नोपलभ्यते, किन्तु तज्जन्यभगवत्प्रसादादेवेति भावेन तद्धेतूक्तिपूर्वकमाह- **अस्तीत्येवेति ॥** उभयोः प्रकृतिपुरुषयोः तत्त्वं प्रामाणिकत्वं प्रकृतिपुरुषभावं वा भावयति सम्पादयतीति तत्त्वभावो भगवान् तेन, तत्प्रसादेनेति यावत्, सर्वस्मादधिकतया अस्तीत्येव ज्ञातव्यः पुरुष इत्यनुषङ्गः । न तु तत्प्रसादेन विना । मुक्तिहेतुः भगवत्प्रसादश्च तत्प्रसादजन्येश्वरविषयोपलम्भादित्याह- **अस्तीत्येवेति ॥** सर्वाधिकतयाऽस्तित्वादस्तीतिनामा भगवान् इत्युपलब्धस्य, कर्तरि निष्ठा, एवमुपलभमानस्य तत्त्वभावः प्रागुक्तव्युत्पत्या भगवान् प्रसीदति परमप्रसादवान् भवति ॥२.३.१३॥

### उपनिषत्

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ २.३.१४ ॥**

### भाष्यम्

**'अन्तःकरणकामानां त्यागो व्यक्तिश्चिदात्मनाम् ।**
**कामानां तु तदा मुक्तो मृतिं नैवाभियास्यति ॥ २.३.१४ ॥**

**व्या-** नन्वाधिक्यज्ञानाद्भवन् भगवत्प्रसादो न फलम् । किन्तु फलहेतुः अतस्तत्फलं किमित्यतो मोक्ष इत्याह- **यदेति ॥** तत्सर्वकामप्रहाणप्रतीतिं निवारयन् व्याचष्टे- **अन्तःकरणेति** ॥ २.३.१४ ॥

**वामन** - एवं सर्वोत्तमत्वज्ञानेन प्रसन्नात् परमात्मनः संसारमोक्षो जीवस्य स्यादित्याह– **यदेति** ॥ इमां सर्वकाममोक्षश्रुतिं सर्वकामाप्तिश्रुत्यविरोधेन योजयति– **"अन्तःकरण..." इत्यादिना महावराहवचनेन** ॥ अमृतो भूत्वा स्वयोग्यतानुसारेण परिपूर्णं सुखमश्नुते ॥ २.३.१४ ॥

**वे.भा**- "यदा सर्वे प्रमुच्यन्ते कामाः" इत्यत्र सर्वकामत्याग उच्यत इति प्रतीतिनिरासाय मन्त्रं प्रमाणेनैव व्याचष्टे- **अन्तःकरणेति** ॥ अत एव श्रुतौ "हृदि स्थिताः" इति विशेषणम् । अन्यथा तद्व्यर्थं स्यादिति भावः । ननु सर्वात्मना कामत्याग एव श्रुत्यर्थः किन्न स्यात् । विशेषणस्य स्वरूपकथन-परत्वोपपत्तेरित्यत आह- **व्यक्तिरिति** ॥ चिदात्मनां तु इत्यन्वयः । मुक्तौ चिदात्मककामव्यक्तिसद्भावात्सर्वकामत्यागस्य श्रुत्यर्थत्वे बाधः स्यादित्युक्त एव श्रुत्यर्थ इति भावः । "अथ मर्त्योऽमृतो भवति" इत्येतद्व्याचष्टे- **तदेति** ॥ अथशब्दार्थः- **तदेति** ॥ अमृतो भवतीत्यस्यार्थः- **मृतिं नैवाभियास्यतीति** ॥ २.३.१४ ॥

**वे.खं**- भगवद्विशेषप्रसादे सति किं भवतीत्यत आह- **यदेति** ॥ यद्वास्य ज्ञानिनो भगवत्प्रसादाद्धृदि स्थिता अन्तःकरणाश्रिताः कामास्ते सर्वे प्रमुच्यन्ते सवासना उच्छिद्यन्ते अथ तदा मर्त्यो मरणादिधर्मकोऽपि अमृतो भवति मृतिं नैवाभियास्यतीति । अत्र मुक्तौ ब्रह्म समश्नुते ब्रह्मविषय-दर्शनादिभोगान् करोतीत्यर्थः ॥ २.३.१४ ॥

**वरद**- तत्त्वभावप्रसादाच्चान्तःकरणविकारभूतकामादिप्रपञ्चनिवृत्तिर्भवती-त्युच्यते- **यदा सर्वे प्रमुच्यन्त इति** ॥ तत्र जीवस्य काममात्रनिवृत्तिः कथ्यत इति प्रतीतिं निराकुर्वन्नेव कामादिनिवृत्त्यनन्तरममृतो भवतीति कथं युज्यते । कामादिनिवृत्तिव्यतिरेकेण मोक्षाभावादित्याशङ्कां परिहरति- **अन्तःकरणेति** ॥ २.३.१४-१४॥

**वरद.खं-** प्रसादे च सति किं भवतीत्यत आह- **यदेति** ॥ भगवत्प्रसादे सति मनोमयाः कामा निवर्तन्ते । यदा च ते निवर्तन्ते अथ तदनन्तरं मर्त्यस्सन् मरणादिधर्मकस्सन् अमृतो भवति मृत्युवर्जितो भवतीत्यर्थः ॥

**रा.खं-** तादृशप्रसादसाध्यं फलमाह- **यदेति** ॥ परमप्रसादे सति पश्चाद् ये हृदि स्थिताः अन्तःकरणगताः सर्वे कामाः ते यदा प्रमुच्यन्ते, कर्मकर्तरि-प्रयोगः, मुक्ता भवन्ति, अपगच्छन्तीति यावत्, अथ अनन्तरं मर्त्योऽमृतो भवति मृतिं नैव प्रपद्यते । कुतः ? अत्र श्वेतद्वीपादिस्थानविशेषे ब्रह्म समश्नुते प्राप्नोति, तस्मादिति योज्यम् ॥ २.३.१४ ॥

**उपनिषत्**

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ २.३.१५ ॥**

**भाष्यम्**

**मिथ्याज्ञानग्रन्थिभिस्तु नितरां मुच्यते यदा ।**
**तदाऽमृतत्वमेवैति तदर्थं चानुशासनम् ॥ २.३.१५ ॥**

**व्या-** हार्दकामत्यागश्च कदा भवतीत्याकाङ्क्षायां तत्कारणाविद्याहङ्कार-कर्मणां हृदयग्रन्थीनां यदा प्रहाणिर्भवति तदेत्याह- **यदेति** ॥ तद्व्याचष्टे- **मिथ्येति** ॥ अनुशासनं निष्कामकर्मश्रवणमननध्यानकर्तव्यताप्रतिपादकं शास्त्रम् ॥ २.३.१५ ॥

**वामन** - हृदयग्रन्थयः मिथ्याज्ञानग्रन्थयः । अमृतत्वार्थमेव वेदानुशासनम् । नामृतस्य विधिबन्धः ॥ २.३.१५ ॥

**वादि-** ''हृदयस्येह ग्रन्थयः'' इत्यत्र ऐक्यनिर्गुणत्वनिराकारत्वादिमिथ्या-ज्ञानग्रन्थयः ॥ २.३.१५ ॥

**वामन** - एवं सर्वोत्तमत्वज्ञानेन प्रसन्नात् परमात्मनः संसारमोक्षो जीवस्य स्यादित्याह– **यदेति** ॥ इमां सर्वकाममोक्षश्रुतिं सर्वकामाप्तिश्रुत्यविरोधेन योजयति– **''अन्तःकरण...'' इत्यादिना महावराहवचनेन** ॥ अमृतो भूत्वा स्वयोग्यतानुसारेण परिपूर्णं सुखमश्नुते ॥ २.३.१४ ॥

**वे.भा-** ''यदा सर्वे प्रमुच्यन्ते कामाः'' इत्यत्र सर्वकामत्याग उच्यत इति प्रतीतिनिरासाय मन्त्रं प्रमाणेनैव व्याचष्टे- **अन्तःकरणेति** ॥ अत एव श्रुतौ ''हृदि स्थिताः'' इति विशेषणम् । अन्यथा तद्व्यर्थं स्यादिति भावः । ननु सर्वात्मना कामत्याग एव श्रुत्यर्थः किन्न स्यात् । विशेषणस्य स्वरूपकथन-परत्वोपपत्तेरित्यत आह- **व्यक्तिरिति** ॥ चिदात्मनां तु इत्यन्वयः । मुक्तौ चिदात्मककामव्यक्तिसद्भावात्सर्वकामत्यागस्य श्रुत्यर्थत्वे बाधः स्यादित्युक्त एव श्रुत्यर्थ इति भावः । ''अथ मर्त्योऽमृतो भवति'' इत्येतद्व्याचष्टे- **तदेति** ॥ अथशब्दार्थः- **तदेति** ॥ अमृतो भवतीत्यस्यार्थः- **मृतिं नैवाभियास्यतीति** ॥ २.३.१४ ॥

**वे.खं-** भगवद्विशेषप्रसादे सति किं भवतीत्यत आह- **यदेति** ॥ यद्वास्य ज्ञानिनो भगवत्प्रसादाद्धृदि स्थिता अन्तःकरणाश्रिताः कामास्ते सर्वे प्रमुच्यन्ते सवासना उच्छिद्यन्ते अथ तदा मर्त्यो मरणादिधर्मकोऽपि अमृतो भवति मृतिं नैवाभियास्यतीति । अत्र मुक्तौ ब्रह्म समश्नुते ब्रह्मविषय-दर्शनादिभोगान् करोतीत्यर्थः ॥ २.३.१४ ॥

**वरद-** तत्त्वभावप्रसादाच्चान्तःकरणविकारभूतकामादिप्रपञ्चनिवृत्तिर्भवती-त्युच्यते- **यदा सर्वे प्रमुच्यन्त इति** ॥ तत्र जीवस्य काममात्रनिवृत्तिः कथ्यत इति प्रतीतिं निराकुर्वन्नेव कामादिनिवृत्त्यनन्तरममृतो भवतीति कथं युज्यते । कामादिनिवृत्तिव्यतिरेकेण मोक्षाभावादित्याशङ्कां परिहरति- **अन्तःकरणेति** ॥ २.३.१४-१४॥

**वरद.खं-** प्रसादे च सति किं भवतीत्यत आह- **यदेति** ।। भगवत्प्रसादे सति मनोमयाः कामा निवर्तन्ते । यदा च ते निवर्तन्ते अथ तदनन्तरं मर्त्यस्सन् मरणादिधर्मकस्सन् अमृतो भवति मृत्युवर्जितो भवतीत्यर्थः ।।

**रा.खं-** तादृशप्रसादसाध्यं फलमाह- **यदेति** ।। परमप्रसादे सति पश्चाद् ये हृदि स्थिताः अन्तःकरणगताः सर्वे कामाः ते यदा प्रमुच्यन्ते, कर्मकर्तरि-प्रयोगः, मुक्ता भवन्ति, अपगच्छन्तीति यावत्, अथ अनन्तरं मर्त्योऽमृतो भवति मृतिं नैव प्रपद्यते । कुतः ? अत्र श्वेतद्वीपादिस्थानविशेषे ब्रह्म समश्नुते प्राप्नोति, तस्मादिति योज्यम् ।। २.३.१४ ।।

**उपनिषत्**

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ।। २.३.१५ ।।**

**भाष्यम्**

**मिथ्याज्ञानग्रन्थिभिस्तु नितरां मुच्यते यदा ।**
**तदाऽमृतत्वमेवैति तदर्थं चानुशासनम् ।। २.३.१५ ।।**

**व्या-** हार्दकामत्यागश्च कदा भवतीत्याकाङ्क्षायां तत्कारणाविद्याहङ्कार-कर्मणां हृदयग्रन्थीनां यदा प्रहाणिर्भवति तदेत्याह- **यदेति** ।। तद्व्याचष्टे- **मिथ्येति** ।। अनुशासनं निष्कामकर्मश्रवणमननध्यानकर्तव्यताप्रतिपादकं शास्त्रम् ।। २.३.१५ ।।

**वामन** - हृदयग्रन्थयः मिथ्याज्ञानग्रन्थयः । अमृतत्वार्थमेव वेदानुशासनम् । नामृतस्य विधिबन्धः ।। २.३.१५ ।।

**वादि-** ''हृदयस्येह ग्रन्थयः'' इत्यत्र ऐक्यनिर्गुणत्वनिराकारत्वादिमिथ्या-ज्ञानग्रन्थयः ।। २.३.१५ ।।

**वे.भा-** ''यदा सर्वे प्रभिद्यन्ते इति मन्त्रं व्याचष्टे- **मिथ्याज्ञानेति** ॥ अनुशासनं वेदान्तोपदेशः एतावत् एतावन्मात्रम् । नत्वधिकमस्तीत्याशङ्कनीयमिति व्याख्यानमसत् । वेदान्तोपदेशस्यैतावन्मात्रत्वे इतरवेदान्तप्रवृत्तिवैयर्थ्यादिति भावेनैतावदनुशासनमित्येतद्व्याचष्टे- **तदर्थमिति** ॥ मिथ्याज्ञानग्रन्थिनिरासार्थमनुशासनम् । निष्कामकर्मश्रवणमनननिदिध्यासनकर्तव्यताप्रतिपादकं शास्त्रमित्यर्थः ॥ २.३.१५ ॥

**वे.खं-** हार्दसर्वकामत्यागोऽपि तद्धेतुमिथ्याज्ञानग्रन्थिप्रभेद एव भवतीति भावेनाह- **यदेति** ॥ यद्वा भगवत्प्रसादेनापि किं भवति । मोक्ष इति चेन्न । अनेकविषयकामानां प्रतिबन्धकानां सत्त्वेनामृतत्त्वायोगादित्यत आह- **यदेति** ॥ अथापि मिथ्याज्ञानाश्रयाविद्याहङ्कारकर्मणां प्रतिबन्धकानां सत्त्वात् कथं मोक्ष इत्यत आह- **यदेति** ॥ इह शरीरे वर्तमानाः हृदयस्य हृदयनस्य हृत्स्थस्य मिथ्याज्ञानस्य ग्रन्थयः आश्रयाः कारणीभूता इति यावत् । अविद्याहङ्कारकर्माणि यदा प्रभिद्यन्ते नितरां भिद्यन्ते । अथ तदैव मर्त्योऽमृतो भवति । मोक्षमेव स्तौति- **एतावदिति** ॥ एतदर्थमेव सर्ववेदानुशासनं प्रवृत्तम् । ''तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत'' (अनु.२.२.१६४) इत्युक्तेरिति भावः ॥ २.३.१५ ॥

**वरद-** ननु हृदयस्य परमसूक्ष्मवस्तुत्वात् कथं तस्य ग्रन्थयो भवन्तीत्यतः संशयविपर्ययादय एव तस्य ग्रन्थयो नान्य इत्याह- **मिथ्याज्ञानेति** ॥ ॥२.३.१५॥

**वरद.खं-** भगवज्ज्ञानेन अज्ञानविपर्यादिहृदयग्रन्थिनिवृत्तिरपि भवतीत्याह- **यदेति** ॥ **एतावदनुशासनमिति** ॥ एतावदर्थं सर्वशास्त्राणामनुशासनं शिक्षेति विष्णुप्रसादेनाज्ञानविपर्यादिनिवृत्तौ मोक्षो भवेदिति यतोऽतः सर्वैरपि वेदैस्तस्य गुणोत्कर्षं ज्ञात्वा तत्प्रसादमापादयेदिति । एतदर्थं शास्त्राणामनुशासनमित्यर्थः ॥२.३.१५॥

**रा.खं-** हृदयगतसर्वकामत्यागः कदेत्यतः तत्कारणाविद्याहङ्कारकर्मणां हृदयग्रन्थीनां यदा त्यागः तदेत्याह- **यदेति ॥** इह मानुषदेहे हृदयस्य सर्वे ग्रन्थयो हृदयस्थाविद्यादिग्रन्थयो यदा प्रभिद्यन्ते अपयन्ति अथ तदा सर्वकामप्रहाणेन मर्त्यः अमृतो मुक्तो भवति । एतावदनुशासनं निष्कामकर्म-श्रवणमननध्यानकर्तव्योक्तिपरं शास्त्रमेतावत् ॥ २.३.१५ ॥

## उपनिषत्

**शतं चैका च हृदयस्य नाड्यस्तासां**
**मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति**
**विष्वङन्या उत्क्रमणे भवन्ति ॥ २.३.१६ ॥**

**व्या-** एवं मोक्षबोधिकां ब्रह्मविद्यां निरूप्य ज्ञानिनश्चरमदेहान्निष्क्रमणे अवश्यं पूर्वं ध्येयं मार्गमाह- **शतमित्यादिना ॥** २.३.१६ ॥

**वामन -** एवं तावद्देवादीनां लिङ्गशरीरभङ्गात्मको मोक्ष उक्तः । अथ मानुषदेहिनां तद्देहादुत्क्रमणप्रकारमाह– **शतं चेति ॥** तया शताधिकया नाड्या । भगवदनुग्रहेण स्थूलदेहादुत्क्रम्य अर्चिरादिमार्गेण ऊर्ध्वं गच्छन् उक्तप्रकारेण लिङ्गभङ्गादमृतत्वमेति ॥२.३.१६॥

**वे.खं-** अमृतत्वप्राप्तिस्तु ब्रह्मनाड्योत्क्रमण एव भवति नान्यथेत्याह- **शतमिति ॥** शतश्चैका च हृदयस्य नाड्यः सन्ति । तासां मध्ये एका प्रधाना नाडी हृदयमारभ्य मूर्धानमभिनिःसृता । तया नाड्या ऊर्ध्वमायन्नमृतत्वं मोक्षमेति । [1]अन्या नाड्यो विष्वगुत्क्रमणे, तादर्थ्यसप्तमी, लोकान्तर-गमनार्थं भवन्तीत्यर्थः ॥२.३.१६॥

---

१. ब्रह्मनाडीं विना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानान्तरं प्राप्नोति । ''निर्गच्छन् नक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि'' ॥ इत्यादि व्यासयोगे मोक्षधर्मे च ॥ गी.भा ८.१२

**वरद.खं-** ज्ञानिनां मोक्षः कदा भवतीत्यत उच्यते- **शतञ्चैका चेत्यादि ॥** यदा ब्रह्मनाड्या उत्क्रमणं तदा मोक्षः । अन्यदा नेति परिहाराभिप्रायः ॥ ॥२.३.१६॥

**रा.खं-** एवं मोक्षहेतुब्रह्मविद्यामुक्त्वा ज्ञानिनः चरमदेहान्निष्क्रमणेऽवश्यं पूर्वं ध्येयमार्गमाह- **शतमित्यादिना ॥** हृदयस्य हृदयसम्बन्धिन्यो नाड्यः शतं चैका च एकोत्तरशतं नाड्यो भवन्ति । तासां मध्ये एका नाडी मूर्धानमभि प्रति निस्सृता तावत्पर्यन्तं गता । तया शतोत्तरया सुषुम्नाख्यया ऊर्ध्वं गच्छन् अमृतत्वमेति । अन्याश्च शतं नाड्यः विष्वगुत्क्रमणे लोकान्तरगमनार्थं भवन्ति । सुषुम्नामार्गो ज्ञानिनां ध्येय इति भावः । तदाह सूत्रकारः ''गत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया'' (ब्र.सू.४-२-१७) इति ॥ २.३.१६ ॥

## उपनिषत्

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादि-[१]वेषीकां धैर्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ २.३.१७ ॥**

## भाष्यम्

**शरीरभूतो विष्णोस्तु जीवस्तद्वशगो यतः ।**
**अधिष्ठितश्च तेनैव विजानीयात् पृथक् ततः ॥**
**स्वाख्याच्छरीराज्जीवात्तु प्रवृहेद् विष्णुमव्ययम्''** । इति च ।

'यस्याऽत्मा शरीरम् । य आत्मानमन्तरो यमयति'' इति च । ''जनानां हृदये'' इत्युक्तत्वाच्च जीवात् पृथग् हरिरिति सिद्धम् ॥

१. ''इषीकान्'' इति वादिराजतीर्थपाठः ।

**देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि ।**
**जीवस्य स तु विज्ञेयो जीवाद् भेदेन मुक्तये ॥ इति च ॥**

**संसारिशरीरेणाभेदो वादिना केनापि नाङ्गीकृतः । न च लोकसिद्धः । जनानामिति भेदात् । न जीवोऽङ्गुष्ठमात्रः । अतो विष्णोर्जीवाद्भेद उक्तः । अतः सर्वोत्तमो विष्णुरिति सिद्धम् ॥ २.३.१७ ॥**

**व्या-** ''अनन्यप्रोक्ते गतिरत्र नास्ति'' इत्यादौ निरूपितं भेदज्ञान-मेवापवर्गसाधनमित्याह- **अङ्गुष्ठेति** ॥ तं जीवं देहाद्भेदेन विजानीयादित्यन्यथा-प्रतीतिं निवारयन्व्याचष्टे- **शरीरभूत इति** ॥ जीवस्य शरीरतया भगवदधिष्ठितत्वं तद्वशत्वञ्च कुतः, येन तयोर्भेदं प्रतीम इत्यत आह- **यस्येति** ॥ नन्वथापि शरीराज्जीवस्यैव भेद उच्यते न जीवाद्भगवतस्तज्ज्ञापकाभावादित्यत आह- **जनानामिति** ॥ चशब्देन ''यस्यात्मा शरीरम्'' इत्युक्तं बाह्यञ्च ज्ञापकं समुच्चिनोति । नन्वत्र जीवस्यैव शरीरांद्भेद उच्यते । भगवतोऽङ्गुष्ठ-मात्रत्वाभावादित्यत आह- **देहेति** ॥ अस्त्वत्रोच्यमानो भगवान् । तस्य शरीरादेव भेदोऽत्रोच्यत इत्यत आह- **संसारीति** ॥ अभेदो भगवत इति शेषः । येन संसारिशरीराद्भगवतोऽभेद उच्येतेति वाक्यशेषः । सत्यं भगवतः संसारि-शरीरादभेदः केनापि वादिना नाङ्गीकृत इति लोकसिद्धोऽभेदः ''स्वाच्छरीरात्'' इति निषिध्यत इत्यत आह- **न चेति** ॥ भगवतः संसारिशरीराभेद इति शेषः । भगवतो जीवाद्भेदे जनानां हृदये निविष्ट इत्युक्तामुपपत्तिं स्फुटयति- **जनानामिति** ॥ जनानां हृदये निविष्ट इति षष्ठ्या निविष्टस्य भगवतो जीवाद्भेदप्रतीतेरित्यर्थः । इतोऽप्यत्र जीवो देहात्पृथगुच्यत इति नेत्याह- **न जीव इति** ॥

**बालाग्रशतभागस्य शतधा भेदितस्य च ।**
**भागो जीव इति ज्ञेयः स चानन्त्याय कल्पते ॥**

इति श्रुतेर्न जीवोऽङ्गुष्ठमात्रः । अवान्तरप्रमेयमुपसंहरति- **अत इति ॥** अतो "जनानां हृदये" इत्याद्युक्तोपपत्तेः । उक्तः "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा" इत्यत्र । मुमुक्षुश्चेद्भगवत उक्तान् शोकरहितत्वाद्यभावगुणान् मुक्तामुक्तप्रेरकत्वादिभावगुणांश्च जानीयादित्युक्तमर्थमुपलक्षणत्वेनावधारयन्नुपसंहरति- **तं विद्यादिति ॥** आदरार्थोऽभ्यासः ॥ २.३.१७ ॥

**वामन** - योऽसौ अङ्गुष्ठमात्रः पुरुषः पुरस्तादुक्तः स इहानूद्यते । तं स्वाच्छरीरात् प्रवृहेदिति विधीयते । तद्वाक्यं विवृणोति– **"शरीरभूत..." इत्यादिना ॥** अयं जीवः विष्णुवशगत्वात् तेनाधिष्ठितत्वाच्च तस्य शरीरमिति उच्यते । अतः स्वात् जीवाख्यात् शरीरात् तं भगवन्तं प्रवृहेत् भिन्न इति जानीयात् । जीवस्य भगवच्छरीरत्वे तन्नियम्यत्वे च "यस्याऽत्मा" इति श्रुतिमाह । तदधिष्ठितत्वे "सदा जानानाम्" इति । एवं तन्नियम्यत्वादिना तच्छरीरभूतः स इत्युक्तत्वाच्च जीवात् पृथगेव भगवान् हरिरिति सिद्धम् । पूर्वत्राङ्गुष्ठमात्रः पुरुषो देहमध्ये तिष्ठतीत्युक्तः । अत्र जीवस्य हृदि जीवाङ्गुष्ठमितः । स द्विरूपोऽपि जीवाद् भेदेनैव ज्ञेयः । "स्वाच्छरीरात्" इत्यत्र जडशरीरादित्यर्थाङ्गीकारो न युक्त इत्याह– **संसारीति ॥** संसारिणो जीवस्य जडशरीरेण परस्याभेदः केनापि वादिना नाङ्गीक्रियते । नचायं लौकिकव्यवहारसिद्धः । अतो न तन्निषेधार्थत्वेन श्रुतिवाक्यं योजनीयम् । नचाङ्गुष्ठमात्रपरिमाणो जीव इति शङ्क्यम् । "जनानां हृदये" इति जीवसंस्थस्य परस्यैव तदुक्तेः । नच तावता तस्य परिच्छिन्नत्वम् । "हृद्यपेक्षया" (ब्र.सू.१.३.२५) इत्युक्तत्वात् । तं भिन्नं भगवन्तं विष्णुं शुक्रममृतं च विद्यात् । शुक्रः शोकादिरहितः शुद्धो वा । अमृतः स्वत एव नित्यमुक्तः । शाखोक्तार्थावधारणार्थं द्विरुक्तिमनुसरन् तमर्थं निगमयति "अतः सर्वोत्तमो विष्णुरिति सिद्धम्" इति । श्रौत इतिशब्दस्तु मृत्योस्तत्त्वोपदेशोपसंहारवाचकः ॥ २.३.१७ ॥

**वादि-** ''अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा'' इत्यत्र योऽन्तरात्मा परमात्माऽङ्गुष्ठमात्रः सूक्ष्मजीवाङ्गुष्ठप्रमाणः सन् जनानां जीवानां हृदये सन्निविष्टः तं परमात्मानं स्वाच्छरीरात् शरीरस्थानीयात् स्वस्मान्मुञ्जादिषीकान् ततोऽप्यतिसूक्ष्मतया क्रूरतया च स्वभावत एव विलक्षणानि तृणाग्राणीव प्रवृहेद्विभक्तं भावयेत् । स्वाच्छरीरात् स्वकीयदेहात् प्रवृहेत् विभक्तं भावयेदित्यर्थस्तु परमात्मनः जीवशरीराभेदस्य वैदिकैः कैरपि वादिभिरनङ्गीकारेण परमात्मनः जीवशरीरस्य च भेदस्य स्वतः सिद्धत्वान्न पृथग्विधेय इति विदुषां परीक्षाक्षमत्वादुपेक्षणीय एव ॥ २.३.१७ ॥

**॥ इति श्रीमद्वादिराजपूज्यचरणकृत**
**काठकोपनिषद्भाष्यटीकाप्रकाशिका समाप्ता ॥**

**वे.भा-** यदुक्तं तृतीयप्रश्नपरिहारौ भगवद्विषयाविति तदयुक्तम् । ''तं स्वात्'' इति उपसंहारवाक्ये तं स्वात् आत्मीयाच्छरीरात्प्रवृहेत् पृथक्कुर्यात् इत्युक्तत्वेन पूर्वमपि देहभिन्नात्मस्वरूपमेव प्रश्नपरिहारविषय इत्यङ्गीकारौचित्यादित्यतस्तत्प्रमाणेनैव व्याख्यातुं तावच्छरीरशब्दार्थमाह- **शरीरभूत इति** ॥ विष्णोर्भिन्नदेहाभावात् विष्णुभिन्नो जीवः कथं शरीरभूत इत्यत उक्तम्- **तद्वशग इति** ॥ यद्वा विष्णोरभिमानाभावात्कथं तच्छरीरभूतो जीव इत्यत उक्तम्- **तद्वशग इति** ॥ प्रसिद्धशरीरवत् तद्वशगत्वादधिष्ठानत्वगुणयोगेनैव जीवः शरीरशब्दोक्त इति भावः । एवं शरीरशब्दार्थमुक्त्वा तद्वाक्यतात्पर्यमाह- **विजानीयादिति** ॥ ततो जीवात् । कथमिदं तात्पर्यमनेन लब्धमित्यतस्तद्व्याचष्टे- **स्वाख्यादिति** ॥ ''प्रवृहेत्'' इत्यस्य पृथक्करणार्थत्वादनादितः पृथग्भूतस्येदानीं पृथक्करणायोगात् पृथक् विजानीयादिति तात्पर्यमुक्तमिति भावः । जीवस्य भगवदधिष्ठितत्वतद्वशत्वाभ्यां भगवच्छरीरत्वे श्रुतिश्चाह- **यस्येति** ॥ ''य आत्मनि तिष्ठन्'' इति पूर्ववाक्यमप्युदाहर्तव्यम् । आत्मा जीवः ''एष त आत्मान्तर्याम्यमृतः''

इत्युत्तरेणान्वयः । "तं स्वाच्छरीरात्प्रवृहेत्" इत्यत्र जीवाद्भगवत एव भेदोऽभिधीयत इत्यत्र युक्तिश्चाह- **जनानमिति** ॥ पूर्ववाक्ये "जनानां हृदये सन्निविष्टः" इति जनशब्दवाच्यजीवेभ्यः तद्धृदयसन्निविष्टस्य भगवत एव भेदस्योक्तत्वादत्रापि जीवात्पृथक् हरिरित्येवोच्यते । नतु प्रसिद्धशरीराज्जीवः पृथगिति सिद्धमिति भावः । ननु "जनानां हृदये सन्निविष्टः" इत्युक्तत्वेऽपि कथं जीवाद्भगवतो भेदसिद्धिः । जीवस्यापि हृदयसन्निविष्टत्वोपपत्तेरिति चेन्न । "जनानां हृदये सन्निविष्टः" इति हि जीवस्वरूपभूतहृदयस्थत्वमुच्यते । जनशब्दः स्वतो जीवे क्वचिद्देहे च वर्तत इति वचनेन जनशब्दस्य जीवदेहोभयपरत्वात् । नच तज्जीवस्योपपद्यते । जीवस्य देहहृदयस्थत्वेऽपि स्वहृदिस्थत्वाभावात् । नन्वेवं तर्हि अङ्गुष्ठमात्रत्वोक्तिविरोधः स्यात् । नहि जीवहृद्गतस्याङ्गुष्ठमात्रत्वं युज्यते । जीवस्यैवाणुत्वेन अङ्गुष्ठपरिमाणकत्वाभावादिति चेन्न । स्यादेवम् । यद्यत्र जीवहृद्गतस्य देहाङ्गुष्ठपरिमाणकत्वमुच्यते । नचैवम् । किन्तु जीवाङ्गुष्ठपरिमाणकत्वमेवातो न विरोध इति भावेन तत्र प्रमाणमाह- **देहेति** ॥ देहे हृदीति सम्बन्धः । जीवस्य हृदीत्यन्वयः । नन्वस्त्वस्मिन्वाक्ये भगवत एव भेदोऽभिधीयत इति । किन्तु स्वाच्छरीरादित्युक्तसंसारिशरीरादेव । नतु जीवादिति किन्न स्यात् । शरीरशब्दस्य शरीरे मुख्यत्वात् । जीवे गौणत्वात् । नहि मुख्ये सम्भवति अमुख्यार्थाङ्गीकारे कारणमस्तीत्यत आह- **संसारीति** ॥ सत्यं शरीरशब्दः शरीरे मुख्य इति । तथाप्यत्र तदनङ्गीकारोऽयुक्तः । संसारिशरीरेण भगवतोऽभेदस्य केनापि वादिनानङ्गीकृतत्वेन तद्भेदप्रतिपादनस्याप्रसक्तप्रतिषेधत्वापातात् । अतो मुख्यार्थग्रहणे बाधकसद्भावादमुख्यार्थाङ्गीकारो युक्त इति भावः । ननु वादिनानङ्गीकृतोऽपि भगवतः संसारिशरीराभेदो लोकसिद्धो भवत्येव । तथाहि । जीवे तावद्भगवदसाधारणधर्मस्य स्वातन्त्र्यादेः अध्यासोऽस्ति । एवञ्च भगवतः संसारिशरीराभेदो लोकभ्रान्तिसिद्धः "तं

स्वाच्छरीरात्'' इति श्रुत्या निषिध्यत इति किन्न स्यादित्यत आह- **न चेति** ॥ भगवतः संसारिशरीराभेद इति शेषः । कुत इत्यत आह- **जनानामिति** ॥ सत्यमस्ति भगवतः संसारिशरीराभेदो लोकसिद्धः । तथापि नासावत्र निषिध्यते । जनानां हृदय इति पूर्ववाक्य एव भगवतो जीवदेहहृद्गतत्वोक्त्या संसारिशरीरभेदस्योक्तत्वेन तन्निषेधस्य जातत्वात् । अत्रापि तन्निषेधे पुनरुक्त्यापातादिति भावः । अभ्युपेत्य चेदमुदितम् । जीवे भगवद्धर्म-स्वातन्त्र्याद्यध्याससद्भावेऽपि शरीराभेदाध्यासाभावस्यान्यत्रोक्तत्वेन भगवति संसारिशरीराभेदस्य लोकसिद्धत्वाभावादिति मन्तव्यम् । भगवतः संसारिशरीराभेदो वादिनाङ्गीकृतोऽपि लोकसिद्धो निषिध्यत इति किन्न स्यादित्यत आह- **न चेति** ॥ भगवतो जीवाद्भेदे ''जनानां हृदये सन्निविष्टः'' इत्युक्तामुपपत्तिं स्फुटयति- **जनानामिति** ॥ जनानां हृदये निविष्ट इति षष्ठ्या निविष्टस्य भगवतो जीवाद्भेदप्रतीतेरित्यर्थ इत्यप्याहुः । ननु मास्तु ''तं स्वात्'' इत्यत्र भगवतः संसारिशरीराद्भेद उच्यत इति । तथापि जीवस्यैव शरीराद्भेद उच्यत इति किन्न स्यात् । जीवेश्वरशरीराभेदस्य चार्वाकादिभिरङ्गीकारात् । एवञ्च शरीरशब्दमुख्यार्थात्यागोऽपीति चेन्न । ''तं स्वात्'' इति शब्देन पूर्वार्धप्रकृतस्यैव परामर्शात् । नच पूर्वार्धप्रकृतो जीवः । तत्र ''अङ्गुष्ठमात्रः'' इत्यङ्गुष्ठमात्रत्वोक्तेः । नच जीवे तद्युक्तम् । तस्य अणुपरिमाणत्वेन देहाङ्गुष्ठमितत्वस्य स्वाङ्गुष्ठमितत्वस्य चासम्भवादिति भावेनाह- **न जीव इति** ॥ सर्वगतस्यापि विष्णोरङ्गुष्ठमात्रत्वं ''हृद्यपेक्षया तु मनुष्याधिकारत्वात्'' इति सूत्रकृतोपपादितमनुसन्धेयम् । ''तं स्वाच्छरीरात्'' इति वाक्यव्याख्यानमुपसंहरति- **अत इति** ॥ उक्तरीत्यार्थान्तरस्यासम्भवात् इत्यर्थः । ''तं स्वाच्छरीरात्'' इत्यत्रेति शेषः । इदानीमशेषोपनिषदर्थमुप-संहरति- **अतः सर्वोत्तम इति** ॥ प्रागुक्तगुणजातस्य सर्वोत्तमत्वं विनाऽसम्भवादिति भावः ॥२.३.१७॥

**वे.खं-** सर्वथा जीवेश्वरभेदज्ञानमेव मोक्षसाधनमिति भावेनाह- **अङ्गुष्ठमात्र इति** ॥ अङ्गुष्ठमात्रो जीवाङ्गुष्ठमितो देहाङ्गुष्ठमितो वा जनानां हृदये जीवस्वरूपहृदये बाह्यहृदये वा सदा सन्निविष्टो योऽन्तरात्मा । तं विष्णुं स्वात् स्वाख्यात् शरीरात् भगवद्वशत्वादिना शरीररूपाज्जीवात् धैर्येण प्रमाणाभासाचलितबुद्ध्या प्रवृहेत् पृथग्जानीयात् । किमिवेत्युच्यते- **बाह्यात् मुञ्जात् अन्तस्थां इषीकामिवेति** ॥ कुतोऽयं जीवाद्भेदेन ज्ञेय इत्यतो विरुद्धधर्माधिकरणत्वादिति भावेनोपसंहरति- **तमिति** ॥

**अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।**
**विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे ॥**

इति वचनात् सर्वाध्यायार्थावधारणार्थाध्यायान्ते द्विरुक्तिः ॥२.३.१७ ॥

**वरद-** भगवदपरोक्षज्ञानार्थं प्रधानसाधनं निरूप्यते- **अङ्गुष्ठमात्र इति** ॥ तस्य ''स्वाच्छरीरात्प्रवृहेत्'' इति जीवस्य यद्बाह्यं शरीरं तस्माज्जीवात्मानं विवेचयेदित्यन्यथार्थनिरासार्थं व्याचष्टे- **शरीरेति** ॥ जीवस्य विष्णुशरीरत्वे बीजमाह- **तद्वशग इति** ॥ बीजान्तरञ्चाह- **अधिष्ठित इति** ॥ ततः शरीररूपात् जीवाद्विष्णुं पृथग्भिन्नत्वेन जानीयादित्यर्थः । तदेव विवृणोति- **स्वाख्यादिति** ॥ जीवस्य विष्णुशरीरत्वे तदधिष्ठितत्त्वे च प्रमाणमाह- **यस्येत्यादिना** ॥ इतोऽप्यत्र जीवादीश्वरस्य पृथग्भाव एवोच्यते न देहात्पृथग्भाव इत्याह- **जनानामिति** ॥ ननु ''अङ्गुष्ठमात्रः पुरुषः'' इत्येतद्विष्णुपरमिति न युज्यते । सर्वगतस्य तस्याङ्गुष्ठमात्रत्वायोगादित्यत आह- **देहेति** ॥ सर्वगतस्यापि रूपविशेषेणाङ्गुष्ठमात्रत्वं न विरुद्ध्यत इत्यर्थः । अस्तु तर्हि जनानां हृदये सन्निविष्ट इत्युक्तत्वात् पूर्वार्धस्य विष्णुविषयत्वं तथापि ''तं स्वाच्छरीरात्प्रवृहेत्'' इत्यस्य जीवस्य देहादीश्वरं पृथक्कुर्यादित्येवार्थः किन्न स्यादित्यत आह- **संसारीति** ॥ विष्णोः संसारशरीरिणा भेदस्य केनापि वादिनानङ्गीकृतत्वेन तद्भेदाभिधानमसङ्गतमेव भवतीत्यर्थः । ननु

विष्णोः संसारशरीरिणाभेदस्य वादिसिद्धत्वाभावेऽपि लोकसिद्धत्वात्तस्य निषेधो सम्भवति । श्रुत्यादावारोपितरजतस्येवेत्यत आह- **न चेति** ॥ ''जनानां हृदये'' इत्युक्तत्वात् । पूर्वार्धे जीवातिरिक्तं वस्तु प्रतिपाद्यत इति यदुक्तं तत्र कथं जीवातिरेकसिद्धिरित्यत आह- **जनानामिति** ॥ जनानां पुरुषं प्रत्याधारत्वेन पुरुषस्य च हृदये सन्निविष्ट इत्याधेयत्वेन प्रतीतेर्जीवानाञ्च अङ्गुष्ठप्रमाणकपुरुषस्य च भेदोऽवगम्यत इत्यर्थः । इतोऽपि पूर्वार्धोक्तो न जीव इत्याह- **नेति** ॥ अङ्गुष्ठप्रमाणत्वं हि विष्णोरेव प्रसिद्धम् । न जीवस्य । तस्य बालाग्रशतभागस्थितगोपुच्छलोमशतांशपरिमाणप्रसिद्धेः । अतश्चाङ्गुष्ठ-परिमितत्वेनोक्तो हरिरेवेति भावः । स्वव्याख्यानमुपसंहरति- **अत इति** ॥ अशेषोपनिषदर्थमुपसंहरति- **अतस्सर्वोत्तम इति** ॥ २.३.१७ ॥

**रा.खं-** ''अनन्यप्रोक्ते गतिरत्र नास्ति'' इत्यादिनोक्तं भेदज्ञानमेव मुक्तिहेतुरित्युपसंहरति- **अङ्गुष्ठमात्र इति** ॥ अन्तरात्मा अन्तर्व्याप्त इति वा, अन्तःप्रेरक इति वार्थः । जनानां मानुषादिचेतनानां हृदये सदा सम्यक् सुखेनैव निविष्टः स्थितः । तं स्वात् स्वात्मरूपात् शरीरात्, उपलक्षणम्, जीवादिति यावत्, यद्वा स्वात् स्वकीयाज्जीवरूपाच्छरीरादित्यर्थः । जीवो हि हरिवशत्वात् हरिणाधिष्ठितत्वाद्धरेः शरीरम् । धैर्येण धीरभावेन सूक्ष्मदृष्ट्येति यावत् । प्रवृहेत् विवेचयेत् भेदेन जानीयादिति यावत् । कथम् ? मुञ्जादिवेषीकां मुञ्जापदेन मौञ्जीधारणार्थं क्रियमाणरज्जुसाधनतृणविशेषः । मुञ्जात् मुञ्जपुञ्जमध्यात् इषीकाख्यविजातीयतृणविशेषमिवेति । यत्तु सुधायां ''देहात्मत्वं यदि न तत्'' इति भक्तिपादीयानुव्याख्यानगमनिकायां देहजीव-परतया व्याख्यातम्, तत्परस्त्यैवेत्यविरोधः । मुमुक्षोः शोकराहित्यस्य अमृतत्वस्य चावश्यापेक्षितत्वात्तस्य तादृक्त्वेन भगवज्ज्ञानेनैव भाव्यत्वात्तज्ज्ञान-मावश्यकमिति भावेनाह- **तमिति** ॥ तं जीवाद्भिन्नं शुक्रं शोकादिदोषवर्जितम्, अमृतं नित्यमुक्तम्, अनाद्यनन्तकालं सम्पूर्णस्वरूपानन्दानुभववन्तमिति

यावत्, तादृशानुभवस्यैव मुक्तिशब्दार्थत्वात्, विद्याज्ज्ञानीयादिति । अभ्यासस्तात्पर्यार्थः । इतिशब्दो वेदनप्रकारवाची वा, समाप्तिवाची वा ध्येयः ॥

### उपनिषत्

**मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद् विमृत्युः अन्योऽप्येवं यो विदध्यात्ममेव ॥**

**॥ इति श्रीकाठकोपनिषत् सम्पूर्णा ॥**

**व्या-** एवं वेदपुरुषो नचिकेतसे मृत्युप्रोक्तां ब्रह्मविद्यामनूद्य तन्निष्ठावतस्तस्य फलमाह- **मृत्युप्रोक्तामिति** ॥ एवमन्यस्यापि तन्निष्ठस्य तत्फलमतिदिशति- **अन्योऽपीति** ॥ अन्योऽप्यध्यात्मवित्सोऽप्येवमेवेति योज्यम् । उपनिषत्प्रतिपादितमर्थमुपसंहरति- **अतः सर्वोत्तम इति** ॥ अतः प्राधान्येनाग्निष्टोमपूज्यत्वात्, मुक्तामुक्तनियामकत्वात्, जगत्सृष्ट्यादिकर्तृत्वात् शोकादिसकलदोषराहित्यात्, विष्णुरेव सर्वोत्तम इति सिद्धमित्यर्थः ॥

**॥ इति श्रीजयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचिता काठकभाष्यटीका सम्पूर्णा ॥**

**वामन-** अथ नचिकेतसस्तत्त्वश्रवणफलमुच्यते– **मृत्युप्रोक्तामिति** ॥ योगविधिः योगानुष्ठानम् । विरजो विगतरागादिर्भूत्वा विष्ण्वाख्यं ब्रह्म प्राप्तो विमृत्युरभूत् । अमृतोऽभवदित्यर्थः । अन्योऽप्येवमध्यात्मवित् तत्प्रसादान्मुक्तो भवेत् ॥ २.३.१८ ॥

**वे.खं-** एवं मृत्युप्रोक्तां विद्यां प्राप्तवता नचिकेतसा विद्याफलं लब्धमित्याह वेदपुरुषः- **मृत्युप्रोक्तामिति** ॥ नाचिकेतो नचिकेता एव नाचिकेतो मृत्युप्रोक्तामेतां विद्याम् । कृत्स्नामिन्द्रियधारणादिरूपयोगविधिश्च लब्ध्वा ब्रह्म प्राप्तो विरजो निर्दुष्टो विमृत्युरभवत् । एवमन्यस्यापि तन्निष्ठस्य

तत्फलमतिदिशति- **अन्योऽपीति** ॥ अन्योऽप्यधिकारी । अध्यात्मं अधिकात्मभगवत्स्वरूपमेवमेव पूर्वोक्तप्रकारेणैवविवित्सोऽपि ब्रह्म प्राप्तो विरजो विमृत्युर्भविष्यतीत्यर्थः ॥२.३.१८॥

**वरद.खं-** एतद्विद्यायाः फलमाह- **मृत्युप्रोक्तामिति** ॥ य अन्योऽपि पुरुषः एवमेवाध्यात्मवित् उक्तप्रकारेणाध्यात्मज्ञानवान् सोऽपि ब्रह्म प्राप्तो भवतीत्यर्थः ॥ २.३.१८ ॥

**रा.खं-** एवं ब्रह्मविद्यां प्राप्य नाचिकेतः किमभूदित्यतो वेदपुरुषो वक्ति- **मृत्युप्रोक्तामिति** ॥ कृत्स्नं योगविधिं च प्रत्याहारादिभगवज्ज्ञानोपायविधिं च लब्ध्वा अनुष्ठाय विरजो निष्पापस्सन् ब्रह्म प्राप्तो भवति प्राप्नोति । विमृत्युरपगतमृत्युः अमृतोऽभूत् । अन्योऽपि योऽध्यात्मं वित् सोऽप्येवमेव भवत्येवेति ॥२.३.१८॥

**निर्दोषगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥**

**इति श्रीकाठकार्थानां सङ्ग्रहोऽकारि यन्मया ।**
**राघवेन्द्रेण यतिना प्रीयतां तेन केशवः ॥**

**॥ इति श्रीराघवेन्द्रयतिकृतकाठकोपनिषत्खण्डार्थः सम्पूर्णः ॥**

उपनिषत्

**सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु । मा विद्विषावहै । ओम् शान्तिः शान्तिः शान्तिः ॥**

**वामन -** अथ नैरन्तर्येण ध्यानादिप्रवृत्तिसिद्ध्यर्थं गुरुशिष्यविषये गुरुणा क्रियमाण आशीर्वादः ''सह नाववतु'' इत्यादिकः । यत् पूर्वं प्रस्तुतं ब्रह्म तत् नौ सहैवावतु । सहैव भोजयतु च । सहैव वीर्यवच्छुभाचरणाय आवयोरधीतं

तेजस्वि अस्तु । तेजोमयब्रह्मविषयमस्तु । अद्वेष्यान् मा विद्विषावहै ब्रह्मप्रसत्तये । कीदृग्भूतं तद् ब्रह्मेति चेत् शान्तिरित्युच्यते । "एतच्छान्तमजरम्" इत्यादिश्रुतेः शान्तं सुखपूर्णम् । इकारस्तु गतिधातुजत्वेन ज्ञानवाचकः । अतः ज्ञानादिगुणगणपरिपूर्णं ब्रह्मेत्यर्थः । अत्रैव महातात्पर्यं सर्ववेदानामिति ज्ञापनार्थमसकृदुक्तिः ॥

**भाष्यम्**

**नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।**
**यस्याहमाप्त आप्तेभ्यो यो म आप्ततमः सदा ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**श्रीकाठकोपनिषद्भाष्यं सम्पूर्णम् ॥**

**व्या-** मङ्गलावसानस्य प्रचयादिहेतुत्वादवसानेऽपि तदाचरणीयमिति द्योतयन् यत्प्रसादात् यत्प्रीत्यै भाष्यमुपक्रम्य समापितवान् तमेवान्तेऽप्युपश्लोकयन् प्रणमति- **नम इति ॥** प्रभविष्णवे प्रभवनशीलायेत्यशेषमतिमङ्गलम् ॥

**॥ इतिश्रीमदानन्दतीर्थभगत्पादाचार्यविरचितस्य**
**काठकोपनिषद्भाष्यस्य टीका**
**श्रीजयतीर्थपूज्यचरणशिष्यश्रीव्यासतीर्थपूज्यचरणविरचिता सम्पूर्णा ॥**

**वामन** - अथेदानीं ग्रन्थावसानेऽपि गुरूणां गुरुतमः श्रीमदानन्दतीर्थाचार्यो विष्ण्वाख्याय इष्टदेवतायै नमस्करोति— **नमो भगवत इति ॥**

**नमस्तस्मै भगवते विष्णवे प्रभविष्णवे ।**
**मध्वो यस्याप्त आप्तेभ्यो यस्तस्याप्ततमः सदा ॥**
**यस्य त्रिरूपाण्युदितानि वायोर्वेदे बलज्ञानवतो बळादौ ।**
**दशप्रमत्याख्यतृतीयरूपी चक्रे हरौ काठकभाष्यमेतत् ॥**
**भाष्यस्यास्यामितार्थस्य टीकां कृत्वात्मशक्तितः ।**
**श्रीमध्वदासदासानां दासो विष्णौ समार्पयत् ॥**

**श्रीप्राणनाथ पुरुषोत्तम लोकनाथ श्रीमध्वनाथ सुमतिप्रद वेदनाथ ।**
**त्वत्पादसञ्ज्ञसुरपादपमूलमाशु मां भाजयाभयमभीष्टदमिष्टदेव ॥**
**नमो नमस्ते सत्स्वामिन् विष्णवे सच्चिदात्मने ।**
**नमो नमस्ते श्रीमध्व गुरवो वो नमो नमः ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीकाठकोपनिषद्भाष्यटीका वामनपण्डिताचार्यविरचिता समाप्ता ॥**

**वे.ख-** एवं यत्प्रसादात् यत्प्रीत्यै चेदं भाष्यमुपक्रम्य समापितवांस्तमेव भगवन्तमन्तेऽपि स्तुतिनतिभ्यां प्रीणयति भगवानाचार्यः- **नम इति ॥** प्रभविष्णवे प्रभवनशीलायेत्यशेषमतिमङ्गलम् ॥

**गुरुस्थानन्दतीर्थार्यहृत्पङ्कजगतो हरिः ।**
**निर्दोषगुणसम्पूर्णः प्रीयतामिन्दिरापतिः ॥**

**प्रीतस्स भगवान्विष्णुर्यद्दद्यात्फलमुत्तमम् ।**
**तत्सर्वं गुरवे दद्यान्न मह्यं किञ्चिदप्यृतम् ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य काठकोपनिषद्भाष्यस्य टीकायां श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायां पदार्थकौमुद्यां द्वितीयोऽध्यायः ॥**

**वरद-** एवं समापितभाष्योऽपि भगवान्भाष्यकारो ग्रन्थावसानेऽपि भगवन्नमस्कारलक्षणं मङ्गलमाचरति- **नम इति ॥**

इत्थं वरदतीर्थेन यतिना यतचेतसा ।
वाक्पुष्पमालया विष्णुः प्रीतो भवति पूजितः ।

॥ इति श्रीवरदतीर्थविरचितकाठकभाष्यसम्बन्धः समाप्तः ॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

**... ॥ समाप्तोऽयं ग्रन्थः ॥ ...**

# परिशिष्टानि

## ॥ अथ नाचिकेतोपाख्यनम् ॥

### नाचिकेताग्निदेवतोपासनाविषयकः कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणगतः तृतीय कांडस्य एकादशप्रपाठकस्य सप्तमोऽनुवाकः

अयं वाव यः पवते । सोऽग्निर्नाचिकेतः । स यत्प्राक् पवते । तदस्य शिरः । अथ यद्दक्षिणा । स दक्षिणः पक्षः । अथ यत्प्रत्यक् । तत्पुच्छम् । यदुदक् । स उत्तरः पक्षः । अथ यत्संवाति । तदस्य समञ्चनञ्च प्रसारणञ्च । अथो सम्पदेवास्य सा ।

स॒ह वा अस्मै स कामः पद्यते । यत्कामो यजते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ।

यो ह वा अग्नेर्नाचिकेतस्याऽऽयतनं प्रतिष्ठां वेद । आयतनवान्भवति । गच्छति प्रतिष्ठाम् । हिरण्यं वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठा । य एवं वेद । आयतनवान्भवति । गच्छति प्रतिष्ठाम् ॥

यो ह वा अग्नेर्नाचिकेतस्य शरीरं वेद । सशरीर एव स्वर्गं लोकमेति । हिरण्यं वा अग्नेर्नाचिकेतस्य शरीरम् । य एवं वेद । सशरीर एव स्वर्गं लोकमेति ॥

अथो यथा रुक्म उत्तमो भाय्यात् । एवमेव स तेजसा यशसा । अस्मि॒श्च लोकेऽमुष्मि॒श्च भाति ॥

उरवो ह वै नामैते लोकाः । येऽवरेणादित्यम् । अथ हैते वरीया॒सो लोकाः । ये परेणऽऽदित्यम् । अन्तवन्त॒ ह वा एष क्षय्यं लोकं जयति । योऽवरेणादित्यम् । अथ हैषोऽनन्तमपारमक्षय्यं लोकं जयति । यः परेणाऽऽदित्यम् ॥

अनन्त॒ह वा अपारमक्षय्यं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ॥

॥ इति सप्तमोऽनुवाकः ॥

## ।। अथ अष्टमोऽनुवाकः ।।

उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस । तꣳह कुमारꣳ सन्तम् । दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश । स होवाच । तत कस्मै मां दास्यसीति । द्वितीयं तृतीयम् ।

तꣳ ह परीत उवाच । मृत्यवे त्वा ददामीति ।

तꣳह स्मोत्थितं वागभिवदति । गौतम कुमारमिति । स होवाच । परेहि मृत्योर्गृहान् । मृत्यवे वै त्वाऽदामिति ।

तं वै प्रवसन्तं गन्तासीति होवाच । तस्य स्म तिस्रो रात्रीरवाश्वान्गृहे वसतात् । स यदि त्वा पृच्छेत् । कुमार कति रात्रीरवात्सीरिति । तिस्र इति प्रतिब्रूतात् । किं प्रथमाꣳ रात्रिमश्ना इति । प्रजां त इति । किं द्वितीयमिति । पशूꣳस्त इति । किं तृतीयमिति । साधुकृत्यां त इति ।

तं वै सन्तं जगाम । तस्य ह तिस्रो रात्रीरनाश्वान्गृह उवास । तमागत्य पप्रच्छ । कुमार कति रात्रीरवात्सीरिति । तिस्र इति प्रत्युवाच । किं प्रथमाꣳरात्रिमश्ना इति । प्रजां त इति । किं द्वितीयामिति । पशूꣳस्त इति । किं तृतीयमिति । साधुकृत्यां त इति ।

नमस्ते इति भगव इति होवाच । वरं वृणीष्वेति । पितरमेव जीवन्नयानीति ।

द्वितीयं वृणीष्वेति । इष्टापूर्तयोर्मेऽक्षितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै तस्येष्टापूर्ते ना क्षीयेते ।

नाऽस्येष्टापूर्ते क्षीयेते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ।

तृतीयं वृणीष्वेति । पुनर्मृत्योर्मेऽपचितिं ब्रूहीति होवाच । तस्मै हैतमग्निं

नाचिकेतमुवाच । ततो वै सोऽप पुनर्मृत्युमजयत् । अप पुनर्मृत्युं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ॥

प्रजापतिर्वै प्रजाकामस्तपोऽतप्यत । स हिरण्यमुदास्यत् । तदग्नौ प्रास्यत् । तदस्मै नाच्छादयत् । तद्द्वितीयं प्रास्यत् । तदस्मै नैवाच्छादयत् । यत्तृतीयं प्रास्यत् । तदस्मै नैवाच्छादयत् । तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत् । तदस्मा अच्छदयत् । तस्माद्धिरण्यं कनिष्ठं धनानाम् । भुञ्जत्प्रितमम् । हृदयज ँ हि । स वै तमेव नाऽविन्दत् । यस्मै तां दक्षिणामानेष्यत् । ता ँ स्वायैव हस्ताय दक्षिणायानयत् । तां प्रत्यगृह्णात् । दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति । सोऽदक्षत दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्रतिगृह्य । य एवं वेद ॥

एतद्ध स्म वै तद्विद्वा ँ सो वाजश्रवसा गोतमाः । अप्यनूदेश्यां दक्षिणां प्रतिगृह्णन्ति । उभयेन वयं दक्षिष्यामह एव दक्षिणां प्रतिगृह्येति । तेऽदक्षन्त दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्रतिगृह्य । य एवं वेद । प्रहान्यं व्लीनाति ।

**॥ इति कृष्णयजुर्वेदीये तैत्तिरीयब्राह्मणे तृतीयकाण्डे एकादशप्रपाठके अष्टमेऽनुवाके नाचिकेतोपाख्यानम् ॥**

## ।। अथ महाभारते अनुशासनपर्वणि षडधिकशततमेऽध्याये नाचिकेतोपाख्यानम् ।।

युधिष्ठिर उवाच-

दत्तानां फलसम्प्राप्तिं गवां प्रब्रूहि मेऽनघ ।
विस्तरेण महाबाहो न हि तृप्यामि कथ्यताम् ।। १ ।।

भीष्म उवाच-

अत्राऽप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषेरौद्दालकेर्वाक्यं नाचिकेतस्य चोभयोः ।। २ ।।

ऋषिरौद्दालकिर्दीक्षामुपगम्य ततस्सुतम् ।
त्वं मामुपचरस्वेति नाचिकेतमभाषत ।। ३ ।।

समाप्ते नियमे तस्मिन्महर्षिः पुत्रमब्रवीत् ।
उपस्पर्शनसक्तस्य स्वाध्यायाभिरतस्य च ।। ४ ।।

इध्मा दर्भास्सुमनसः कलशश्चाभितो जलम् ।
विस्मृतं मे तदादाय नदीतीरादिहाव्रज ।। ५ ।।

गत्वाऽनवाप्य तत्सर्वं नदीवेगसमाप्लुतम् ।
न पश्यामि तदित्येवं पितरं सोऽब्रवीन्मुनिः ।। ६ ।।

क्षुत्पिपासाश्रमाविष्टो मुनिरौद्दालकिस्तदा ।
यमं पश्येति तं पुत्रमशपत्क्रोधमूर्छितः ।। ७ ।।

तथा स पित्राऽभिहतो वाग्वज्रेण कृताञ्जलिः ।
प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ।। ८ ।।

नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्छितः ।
किं मया कृतमित्युक्त्वा निपपात महीतले ।। ९ ।।

तस्य दुःखपरीतस्य स्वं पुत्रमनुशोचतः ।
व्यतीतं तदहश्शेषं सा चोग्रा तत्र शार्वरी ।। १० ।।

पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरूद्वह ।
प्रास्यन्दच्छयने कौश्ये वृष्ट्या सस्यमिवाप्लुतम् ॥ ११ ॥

स पर्यपृच्छत्तं पुत्रं श्लाघ्यं पर्यागतं पुनः ।
दिव्यैर्गन्धैस्समादिग्धं क्षीणस्वप्नमिवोत्थितम् ॥ १२ ॥

अपि पुत्र जिता लोकाः शुभास्ते स्वेन कर्मणा ।
दिष्ट्या चाऽसि पुनः प्राप्तो न हि ते मानुषं वपुः ॥ १३ ॥

प्रत्यक्षदर्शी सर्वस्य पित्रा पृष्टो महात्मना ।
अभ्युत्थाय पितुर्मध्ये महर्षीणां न्यवेदयत् ॥ १४ ॥

कुर्वन्भवच्छासनमाशु यातो ह्यहं विशालां रुचिरप्रभासाम् ।
वैवस्वतीं प्राप्य सभामवश्यं सहस्रशो योजनहैमभौमाम् ॥ १५ ॥

दृष्ट्वैव मामभिमुखमापतन्तं गृहं निवेद्यासनमादिदेश ।
वैवस्वतोऽर्घ्यादिभिरर्हणैश्च भवत्कृते पूजयामास मां सः ॥ १६ ॥

ततस्त्वहं तं शनकैरवोचं वृतस्सदस्यैरभिपूज्यमानः ।
प्राप्तोऽस्मि ते विषयं धर्मराज लोकानर्हो यानहं तान्विधत्स्व ॥ १७ ॥

यमोऽब्रवीन्मां न मृतोऽसि सौम्य यमं पश्येत्याह स त्वां तपस्वी ।
पिता प्रदीप्ताग्निसमानतेजा न तच्छक्यमनृतं विप्र कर्तुम् ॥ १८ ॥

दृष्टस्तेऽहं प्रतिगच्छस्व तात शोचत्यसौ तव देहस्य कर्ता ।
ददानि किञ्चापि मनःप्रणीतं प्रियातिथेस्तव कामान्वृणीष्व ॥ १९ ॥

तेनैवमुक्तस्तमहं प्रत्यवोचं प्राप्तोऽस्मि ते विषयं दुर्निवर्त्यम् ।
इच्छाम्यहं पुण्यकृतां समृद्धांल्लोकान्द्रष्टुं यदि तेऽहं वरार्हः ॥ २० ॥

यानं समारोप्य तु मां स देवो वाहैर्युक्तं सुप्रभं भानुमत्तत् ।
सन्दर्शयामास तदाऽऽत्मलोकान्सर्वांस्तथा पुण्यकृतां द्विजेन्द्र ॥ २१ ॥

अपश्यं तत्र वेश्मानि तैजसानि महात्मनाम् ।
नाना संस्थानरूपाणि सर्वरत्नमयानि च ॥ २२ ॥

चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
अनेकशतभौमानि सान्तर्जलवनानि च ॥ २३ ॥

वैडूर्यार्कप्रकाशानि रूप्यरुक्ममयानि च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ २४ ॥

भक्ष्यभोज्यमयाञ्छैलान्वासांसि शयनानि च ।
सर्वकामफलांश्चैव वृक्षान्भवनसंस्थितान् ॥ २५ ॥

नद्यो वीथ्यः सभा वाप्यो दीर्घिकाश्चैव सर्वशः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ २६ ॥

क्षीरस्रवा वै सरितो गिरींश्च सर्पिस्तथा विमलश्चापि तोयम् ।
वैवस्वतस्यानुमतांश्च देशानदृष्टपूर्वान्सुबहूनपश्यम् ॥ २७ ॥

सर्वान्दृष्ट्वा तदहं धर्मराजमवोचं वै सर्वदेवं सहिष्णुम् ।
क्षीरस्यैताः सर्पिषश्चैव नद्यः शश्वत्स्रोताः कस्य भोज्याः प्रवृत्ताः ॥ २८ ॥

यमोऽब्रवीद्विद्धि भोज्यांस्त्वमेतान्ये दातारः साधवो गोरसानाम् ।
अन्ये लोकाः शाश्वता वीतशोकैः समाकीर्णा गोप्रदाने रतानाम् ॥ २९ ॥

न त्वेतासां दानमात्रं प्रशस्तं पात्रं कालो गोविशेषो विधिश्च ।
ज्ञात्वा देयं विप्र गवान्तरं हि दुःखं ज्ञातुं पावकादित्यभूतम् ॥ ३० ॥

स्वाध्यायवान्योऽतिमात्रं तपस्वी वैतानस्थो ब्राह्मणः पात्रमासाम् ।
गोषु क्षान्तं गोशरण्यं कृतज्ञं वृत्तिग्लानं तादृशं पात्रमाहुः ॥ ३१ ॥

कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः ।
अन्तर्जाताः सुक्रयज्ञानलब्धाः प्राणक्रीताः सोदकाः सोद्वहाश्च ॥ ३२ ॥

तिस्रो रात्र्यस्त्वद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः प्रीताः सुप्रजाः सोपचारास्त्र्यहं दत्वा गोरसैर्वर्तितव्यम् ॥ ३३ ॥

दत्वा धेनुं सुव्रतां साधुदोहां कल्याणवत्सामपलायिनीश्च ।
यावन्ति रोमाणि भवन्ति तस्यास्तावद्वर्षाण्यश्नुते स्वर्गलोकम् ॥ ३४ ॥

तथाऽनड्वाहं ब्राह्मणेभ्यः प्रदाय दान्तं धुर्यं बलवन्तं युवानम् ।
कुलानुजीव्यं वीर्यवन्तं बृहन्तं भुङ्क्ते लोकान्सम्मितान्धेनुदस्य ।। ३५ ।।

वृद्धे ग्लाने सम्भ्रमे वा महार्थे कृश्यर्थं वा हौम्यहेतोः प्रसूत्याम् ।
गुर्वर्थं वा यज्ञसमाप्तये वा गां वै दातुं देशकालोऽविशिष्टः ।। ३६ ।।

नाचिकेत उवाच-

श्रुत्वा वैवस्वतवचस्तमहं पुनरब्रवम् ।
अगोमी गोप्रदातॄणां कथं लोकान्हि गच्छति ।। ३७ ।।

ततोऽब्रवीद्यमो धीमान् गोप्रदानं ततो गतिम् ।
गोप्रदानानुकल्पात्तु गामृते सन्तु गोप्रदाः ।। ३८ ।।

अलाभे यो गवां दद्यात् घृतधेनुं यतव्रतः ।
तस्यैता घृतवाहिन्यः क्षरन्ते वत्सला इव ।। ३९ ।।

घृतालाभे तु यो दद्यात्तिलधेनुं यतव्रतः ।
स दुर्गात्तारितो धेन्वा क्षीरनद्यां प्रमोदते ।। ४० ।।

तिलालाभे तु यो दद्याज्जलधेनुं यतव्रतः ।
स कामप्रवहां शीतां नदीमेतामुपाश्नुते ।। ४१ ।।

एवमेतानि मे तत्र धर्मराजो न्यदर्शयत् ।
दृष्ट्वा च परमं हर्षमवापमहमच्युत ।। ४२ ।।

निवेदये चाऽहमिमं प्रियं ते ऋतुर्महानल्पधनप्रचारः ।
प्राप्तो मया तात स मत्प्रसूतः प्रपत्स्यते वेदविधिप्रवृत्तः ।। ४३ ।।

शापो ह्ययं भवतोऽनुग्रहाय प्राप्तो मया यत्र दृष्टो यमो वै ।
दानव्युष्टिं तत्र दृष्ट्वा महात्मन् निस्सन्दिग्धान् दानधर्मांश्चरिष्ये ।। ४४ ।।

इदञ्च मामब्रवीद्धर्मराजः पुनः पुनः सम्प्रहृष्टो महर्षे ।
दानेन यत्प्रयतोऽभूत्सदैव विशेषतो गोप्रदानञ्च कुर्याम् ।। ४५ ।।

शुद्धो ह्यर्थो नावमन्यस्व धर्मान्पात्रे देयं देशकालोपपन्ने ।
तस्माद्गावस्ते नित्यमेव प्रदेया माभूच्च ते संशयः कश्चिदत्र ।। ४६ ।।

एताः पुरा ह्यददन्नित्यमेव शान्तात्मनो दानपथे निविष्टाः ।
तपांस्युग्राण्यप्रतिशङ्कमानास्ते वै दानं प्रददुश्चैव शक्त्या ।। ४७ ।।

काले च शक्त्या मत्सरं वर्जयित्वा शुद्धात्मानः श्रद्धिनः पुण्यशीलाः ।
दत्वा गा वै लोकममुं प्रपन्ना देदीप्यन्ते पुण्यशीलास्तु नाके ।। ४८ ।।

एतद्दानं न्यायलब्धं द्विजेभ्यः पात्रे दत्तं प्रापणीयं परीक्षा ।
काम्याष्टम्यां वर्तितव्यं दशाऽहं रसैर्गवां शकृता प्रस्नवैर्वा ।। ४९ ।।

देवव्रती स्यात् वृषभप्रदानैर्वेदावाप्तिर्गोयुगस्य प्रदाने ।
तीर्थावाप्तिर्गोप्रयुक्तप्रदाने पापोत्सर्गः कपिलायाः प्रदाने ।। ५० ।।

गामप्येकां कपिलां सम्प्रदाय न्यायोपेतां कलुषाद्विप्रमुच्येत् ।
गवां रसात्परमं नाऽस्ति किञ्चिद्गवां प्रदानं सुमहद्वदन्ति ।। ५१ ।।

गावो लोकांस्तारयन्ति क्षरन्त्यो गावश्चान्नं सञ्जनयन्ति लोके ।
यस्तं जानन्न गवां हार्दमेति स वै गन्ता निरयं पापचेताः ।। ५२ ।।

यैस्तद्दत्तं गोसहस्रं शतं वा दशार्धं वा दश वा साधुवत्सम् ।
अप्येकं वा साधवे ब्राह्मणाय सा स्यामुष्मिन्पुण्यतीर्था नदी वै ।। ५३ ।।

प्राप्त्या पुष्ट्या लोकसंरक्षणेन गावस्तुल्या सूर्यपादैः पृथिव्याम् ।
शब्दश्चैकस्सन्नतिश्चोपभोगा तस्माद्गोदस्सूर्य इवावभाति ।। ५४ ।।

गुरुं शिष्यो वरयेद्गोप्रदाने स वै गन्ता नियतं स्वर्गमेव ।
विधिज्ञानां सुमहान्धर्म एष विधिं ह्याद्यं विधयस्संविशन्ति ।। ५५ ।।

इदं दानं न्यायलब्धं द्विजेभ्यः पात्रे दत्वा प्रापयेथाः परीक्ष्य ।
त्वय्याशंसन्त्यमरा दानवाश्च वयश्चापि प्रसृते पुण्यशीले ।। ५६ ।।

इत्युक्तोऽहं धर्मराजं द्विजर्षे धर्मात्मानं शिरसाऽभिप्रणम्य ।
अनुज्ञातस्तेव वैवस्वतेन प्रत्यागमं भगवत्पादमूलम् ।। ५७ ।।

।। इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षडधिकशततमोऽध्यायः ।।

# ಶ್ರೀಕಾಠಕೋಪನಿಷತ್ಭಾಷ್ಯ
# ಕನ್ನಡ ಭಾವಾನುವಾದ

ನಮೋ ಭಗವತೇ ತಸ್ಮೈ ಸರ್ವತಃ ಪರಮಾಯ ತೇ ।
ಸರ್ವಪ್ರಾಣಿಹೃದಿಸ್ಥಾಯ ವಾಮನಾಯ ನಮೋ ನಮಃ ॥

ಭಗವಂತನನ್ನು ತಿಳಿಸಲು ಹೊರಟಿದೆ ಕಾಠಕೋಪನಿಷತ್. ಅವನ ಅರಿವೇ ಆತ್ಯಂತಿಕ ಅನಿಷ್ಟಪರಿಹಾರಕ್ಕೆ ಮತ್ತು ಇಷ್ಟಪ್ರಾಪ್ತಿಗೆ ಉಪಾಯವಾಗಿದೆ. ವಿಷಯವಿರಕ್ತನಾದವನು, ಶಮದಮಾದಿಯುತನಾದವನು, ಮುಮುಕ್ಷುವಾದವನು ಈ ವಿದ್ಯೆಗೆ ಅಧಿಕಾರಿಯಾಗಿದ್ದಾನೆ. ಅವನು ಅಧಿಕಾರಿಯಾಗಿದ್ದರೂ ಉಪನಿಷತ್ತುಗಳಿಂದ ನೇರವಾಗಿ ಭಗವಂತನ ಜ್ಞಾನವಾಗುವದಿಲ್ಲ. ಹರಿಯನ್ನರಿತ ಹಿರಿಯರ ಉಪದೇಶದ ನೆರವು ಅವನಿಗಿರಬೇಕು. ಅದಿಲ್ಲದಿರುವಾಗ ಅಧಿಕಾರಿಯಾಗಿದ್ದರೂ ಯಾವ ಬೋಧವೂ ಅವನಿಗಾಗುವದಿಲ್ಲ.

ಈ ಉಪನಿಷತ್ತಿಗೆ ಯಥಾರ್ಥವಾದ ವ್ಯಾಖ್ಯಾನದ ನೆರವಿಲ್ಲ. ಅಪವ್ಯಾಖ್ಯಾನಗಳಿಂದ ಅವರುದ್ಧವಾಗಿದೆ. ಹೀಗಾಗಿ ಅಜ್ಞರಿಗೆ ಉಪನಿಷತ್ತಿನಿಂದ ದೇವರ ಮಹಿಮೆ ತಿಳಿದು ಬರುತ್ತಿಲ್ಲವೆಂಬ ಸಂಗತಿಯನ್ನರಿತ ಆಚಾರ್ಯರು ಸ್ವಕಪೋಲಕಲ್ಪಿತವಾದ ವಾದಗಳನ್ನು ನಿರಾಕರಣೆ ಮಾಡಿ ಪುರಾಣಗಳ, ಇತಿಹಾಸಗಳ ಸಂವಾದದಿಂದ ಯಥಾರ್ಥವಾದ ತತ್ತ್ವವನ್ನು ತಿಳಿಸಲು ಇದಕ್ಕೆ ಭಾಷ್ಯವನ್ನು ರಚಿಸಿದ್ದಾರೆ.

ಗ್ರಂಥಗಳನ್ನು ರಚಿಸುವಾಗ ಪ್ರತ್ಯೂಹಗಳ ಪರಿಹಾರಕ್ಕೆ ಮಂಗಳವನ್ನು ಮಾಡಲೇಬೇಕು. ಇದು ಶಿಷ್ಟಾಚಾರ. ಅಖಣ್ಡಾಶ್ಮಸಮರಾದ ಸಮೀರರಿಗೆ ವಿಘ್ನಗಳಿಲ್ಲದಿದ್ದರೂ ಶಿಷ್ಟಾಚಾರವೆಂಬುದನ್ನು ಗಮನದಲ್ಲಿಟ್ಟುಕೊಂಡು ಮಂಗಳವನ್ನು ಹಾಡುತ್ತಾರೆ. ಭಗವಂತನ ಯಾವ ರೂಪಕ್ಕಾದರೂ ನಮನ ಸಲ್ಲಿಸಿದರೆ ಸಾಕು. ಅದು ಮಂಗಲವೆ. ಆದರೂ ತತ್ತತ್ ಗ್ರಂಥಪ್ರತಿಪಾದ್ಯ ಯಾರೆಂದು ತಿಳಿಸುತ್ತಾ ನಮಸ್ಕರಿಸುವುದು ಮತ್ತಷ್ಟು ವಿಶೇಷ

ಅಕ್ಷರಗಣನೆಯಿಂದ ಛಂದೋಜ್ಞಾನ ಸುಕರ. ಅದನ್ನು ಎಲ್ಲರೂ ತಿಳಿಸುತ್ತಾರೆ. ತಿಳಿಸಬಹುದು. ಆದರೆ ಪ್ರತಿಪಾದ್ಯದೇವತೆ ಮತ್ತು ದ್ರಷ್ಟೃಗಳಾದ ಋಷಿಗಳ ಜ್ಞಾನಮಾಡಿ-ಕೊಳ್ಳುವುದು ಕ್ಲಿಷ್ಟ. ಆದರೆ ಶ್ರೀಮದಾಚಾರ್ಯರು ಅದನ್ನು ಪ್ರಮಾಣಪುರಸ್ಸರವಾಗಿ ತಿಳಿಸುತ್ತಾರೆ. ಪ್ರಕೃತ ಈ ಉಪನಿಷತ್ಪ್ರತಿಪಾದ್ಯದೇವತೆ ವಾಮನರೂಪಿಯಾದ ಪರಮಾತ್ಮ. ಇದೇ ಉಪನಿಷತ್ತಿನಲ್ಲಿ ಬರುವ ''ಮಧ್ಯೇ ವಾಮನಮಾಸೀನಮ್'' ಎಂಬ ವಚನದ ಆಧಾರ ಈ ಮಾತಿಗೆ ಇದೆ. ಹೀಗಾಗಿ ಆ ದೇವತೆಯನ್ನು 'ನಮೋ ಭಗವತೇ' ಎಂಬ ಮಂಗಲಪದ್ಯದಿಂದ ಕೊಂಡಾಡುತ್ತಿದ್ದಾರೆ ಆಚಾರ್ಯರು.

**ಭಗವತೇ ತಸ್ಮೈ**

ಸಮಗ್ರವಾದ ಸಿರಿ, ಪರಿಪೂರ್ಣವಾದ ವೀರ್ಯ, ಅಭಿವೃದ್ಧವಾದ ಕೀರ್ತಿ, ತುಂಬಿದ ಸೊಬಗು, ಘನವಾದ ಜ್ಞಾನ, ವಿಚಿತ್ರವಾದ ವೈರಾಗ್ಯ ಈ ಆರು ಗುಣಗಳಿಂದ ಸಂಪನ್ನನಾದವನು ವಾಮನ. ವೇದ-ಪುರಾಣ-ಇತಿಹಾಸಗಳಲ್ಲಿ ಪ್ರಸಿದ್ಧನಾದ ಪರಮಾತ್ಮನೆ ವಾಮನ.

**ವಾಮನಾಯ ನಮೋ ನಮಃ**

'ವಾಮನಾಯ ನಮಃ' ಎಂದು ಪರೋಕ್ಷತಃ ನಮಸ್ಕಾರ ಮಾಡಿದ ನಂತರ 'ತೇ ವಾಮನಾಯ ನಮೋ ನಮಃ' ಎಂದು ಅಪರೋಕ್ಷತಃ ಆ ಭಗವಂತನಿಗೆ ನಮಸ್ಕಾರವನ್ನು ಸಲ್ಲಿಸುತ್ತಿದ್ದಾರೆ. ಅಪರೋಕ್ಷವಾದ ಭಗವಂತನ ರೂಪದಲ್ಲಿ ಅತಿಶಯವಾದ ಭಕ್ತಿಯನ್ನು ''ನಮೋ ನಮಃ'' ಎಂಬ ದ್ವಿರುಕ್ತಿಯು ಸೂಚಿಸುತ್ತದೆ. ಅಕ್ಷಿಪಕ್ಷ್ಮಾದಿಗಳ ಚಲನದಂತೆ ಸುಮ್ಮನೆ ತಾನಾಗಿಯೆ ನಡೆದು ಹೋಗುವ ಕ್ರಿಯೆ ಇದಲ್ಲ. ಉದ್ದೇಶಪೂರ್ವಕವಾಗಿ ಆಚರಿಸಿದ ಸತ್ಕರ್ಮವಿದು. ಭಗವಂತ ಸರ್ವತಃಪರಮನೆಂಬುದನ್ನು ಮನಗಂಡು ಮಾಡಿದ ನಮಸ್ಕಾರವಿದು.

'ಇಂದ್ರಿಯೇಭ್ಯಃ ಪರಾಃ' ಎಂಬ ಮಾತಿನಿಂದ ಮೊದಲು ಮಾಡಿ 'ಅವ್ಯಕ್ತಾತ್ ಪುರುಷಃ ಪರಃ' ಎಂಬ ವಚನದ ವರೆಗೆ ಹರಿಯ ಪಾರಮ್ಯವೇ ಇಲ್ಲಿ ಪ್ರತಿಪಾದಿತವಾಗಿದೆ.

**ಸರ್ವಪ್ರಾಣಿಹೃದಿಸ್ಥಾಯ**

ದೇಶದ ದೊರೆಯ ದಯೆಯನ್ನು ಪಡೆಯಬೇಕಾದರೆ ಹತ್ತು ಹಲವಾರು ಕಡೆ ಅಲೆದಾಡಬೇಕಾಗುತ್ತದೆ. ಆದರೆ ಇಂದ್ರಿಯಗಳನ್ನು ಪ್ರಾರಂಭಿಸಿ ಅವ್ಯಕ್ತಾಂತತತ್ತ್ವಗಳಿಗೆ, ತದಭಿಮಾನಿದೇವತೆಗಳಿಗೆ ನಿಯಾಮಕನಾದ, ಸರ್ವತಃಪರಮನಾದ, ಪರಮಾತ್ಮನ ದರ್ಶನವನ್ನು ನಮ್ಮ ನಮ್ಮ ಹೃದಯದಲ್ಲಿಯೇ ಪಡೆಯಬಹುದು.

'ಅಂಗುಷ್ಠಮಾತ್ರಃ ಪುರುಷೋ ಮಧ್ಯ ಆತ್ಮನಿ ತಿಷ್ಠತಿ' 'ವಿದ್ಧಿ ತ್ವಮೇತಂ ನಿಹಿತಂ ಗುಹಾಯಾಂ' ಎಂಬ ವಚನಗಳ ವ್ಯಾಖ್ಯಾನರೂಪವಾಗಿದೆ ಈ ಪಾದ.

**ತೇ ವಾಮನಾಯ ನಮೋ ನಮಃ-**

ಬ್ರಹ್ಮವಿದ್ಯೆ ವೃಕ್ಷವಾದರೆ ಮೋಕ್ಷವೆ ಅದರ ಪರಿಪಕ್ವವಾದ ಫಲವಾಗಿದೆ. ಸ್ವರ್ಗವೆ ಅದರ ಪುಷ್ಪ ಇಷ್ಟೆ ಅಲ್ಲ, ಐಹಿಕಫಲಗಳು ಕೂಡಾ ಅದರಿಂದ ಲಭ್ಯವಾಗುತ್ತವೆ. ಇದನ್ನು ನಚಿಕೇತನ ಆಖ್ಯಾಯಿಕೆಯಿಂದ ತಿಳಿಸುತ್ತಾ ಶ್ರೋತೃಗಳಲ್ಲಿ ಶ್ರದ್ಧೆಯನ್ನು ಹುಟ್ಟಿಸುತ್ತದೆ ಈ ಉಪನಿಷತ್ತು.

> ಉಶನ್ ಹ ವೈ ವಾಜಶ್ರವಸಃ ಸರ್ವವೇದಸಂ ದದೌ ।
> ತಸ್ಯ ಹ ನಚಿಕೇತಾ ನಾಮ ಪುತ್ರ ಆಸ ॥ ೧.೧.೧ ॥
>
> ತಂ ಹ ಕುಮಾರಂ ಸಂತಂ ದಕ್ಷಿಣಾಸು ನೀಯಮಾನಾಸು
> ಶ್ರದ್ಧಾಽಽವಿವೇಶ । ಸೋಽಮನ್ಯತ ॥ ೧.೧.೨ ॥
>
> ಪೀತೋದಕಾ ಜಗ್ಧತೃಣಾ ದುಗ್ಧದೋಹಾ ನಿರಿಂದ್ರಿಯಾಃ ।
> ಅನಂದಾ ನಾಮ ತೇ ಲೋಕಾಃ ತಾನ್ ಸ ಗಚ್ಛತಿ ತಾ ದದತ್ ॥

"ವಾಜಶ್ರವಸ್" ಎಂಬ ಋಷಿಯ ಮೊಮ್ಮಗನ ಮಗ ಉದ್ದಾಲಕ. ಸ್ವರ್ಗಲೋಕ ಹೊಂದಬೇಕೆಂಬ ಹೆಬ್ಬಯಕೆ ಆತನಿಗೆ. ಅದಕ್ಕಾಗಿ ಯಜ್ಞವನ್ನು ಮಾಡಲಾರಂಭಿಸಿದ. ಯಾಗಕ್ಕೆ ಅನುಗುಣವಾದದ್ದು ಸರ್ವಸ್ವದಾನವೆಂದು ಭಾವಿಸಿದ. ಎಲ್ಲವನ್ನು ಧಾರೆ ಎರೆದ.

ವಿಶ್ವಜಿತ್ ಎಂಬ ಯಾಗ ಮಾಡಿದವನು ಸರ್ವಸ್ವದಾನ ಮಾಡಬೇಕೆಂದು ಶ್ರುತಿಸ್ಮೃತಿಗಳು ವಿಧಿಸಿವೆ. ಆದರೆ ಕೊಡುವ ಆ ಪದಾರ್ಥಗಳು ಉಪಯುಕ್ತವಾಗಿರಬೇಕು. ಅಂಥಹ ಸರ್ವಸಂಪತ್ತನ್ನು ದಾನಮಾಡಬೇಕೆಂದು ಕಟ್ಟಪ್ಪಣೆ.

ಪೂರ್ವಕರ್ಮದ ಪ್ರಭಾವಕ್ಕೆ ಒಳಗಾದ ಉದ್ದಾಲಕರಿಗೆ ಆ ಕಟ್ಟಪ್ಪಣೆ ಅರ್ಥವಾಗಲಿಲ್ಲ. ಹೀಗಾಗಿ ಯಾವುದಕ್ಕೂ ಉಪಯೋಗಬೀಳದ ಆಕಳುಗಳನ್ನು ನೀಡಲು ಮುಂದಾದರು.

ಆ ಹಸುಗಳ ಪರಿಸ್ಥಿತಿ ಶೋಚನೀಯವಾಗಿತ್ತು. ಹಲ್ಲುಗಳೆಲ್ಲ ಶಿಥಿಲವಾಗಿದ್ದವು. ಹುಲ್ಲನ್ನು ಅಗಿಯುವ ಶಕ್ತಿ ಆ ಹಲ್ಲುಗಳಿಗಿರಲಿಲ್ಲ. ಹೀಗಾಗಿ ಬಹಳ ದಿನಗಳಿಂದ ಏನನ್ನೂ ತಿಂದಿರಲಿಲ್ಲ. ಏನೂ ತಿನ್ನದ ಕಾರಣ ಅವುಗಳಿಗೆ ಬಾಯಾರಿಕೆಯೂ ಆಗಿರಲಿಲ್ಲ. ಒಟ್ಟಾರೆ ತಿನ್ನುವ ಕುಡಿಯುವ, ನೋಡುವ, ನಡೆದಾಡುವ ಸಾಮರ್ಥ್ಯವನ್ನೆ ಕಳೆದುಕೊಂಡಿದ್ದವು. ಇಂದ್ರಿಯವ್ಯಾಪಾರಗಳೆಲ್ಲ ಶೂನ್ಯವಾಗಿದ್ದವು. ಇಂತಹ ಗೋಸಂಪತ್ತನ್ನು ದಾನ ಮಾಡಲಾರಂಭಿಸಿದರು.

ಈ ದಾನ ಪ್ರಾಮಾದಿಕವಾಗಿರಲಿಲ್ಲ. ಗೊತ್ತಾಗದೇ ನೀಡಿದ ದಾನ ಇದಾಗಿರಲಿಲ್ಲ. ಕಿಂತು ಇವುಗಳನ್ನೇ ದಾನಮಾಡಬೇಕೆಂಬ ಭಾವನೆ ಅವರಲ್ಲಿ ಇತ್ತು. ಉದ್ದೇಶಪೂರ್ವಕವಾಗಿಯೇ ಇಂತಹ ಆಕಳುಗಳನ್ನು ದಾನ ನೀಡಲು ಮುಂದಾದರು. "ಪೀತೋದಕಾಃ" ಎಂಬಲ್ಲಿಯ

ಬಹುವಚನ ಇದನ್ನು ಸೂಚಿಸುತ್ತದೆ. ಇಂತಹ ಆಕಳುಗಳನ್ನು ದಾನಮಾಡುವುದರಿಂದ ಅನಂದಲೋಕಗಳು ಅರ್ಥಾತ್ ಆನಂದವಿಲ್ಲದಿರುವ ಲೋಕಗಳು ದೊರೆಯುತ್ತವೆ.

ಆದರೆ ಅವರ ಭಾವನೆಗಳಿಗೆ ನಚಿಕೇತ ಅಡ್ಡಿಯಾದ. ಅಂದಹಾಗೆ ನಚಿಕೇತ ಉದ್ದಾಲಕರ ಮಗ. ಕುಮಾರನಾದರೂ ಶಾಸ್ತ್ರಗಳ ಸಾರಾಸಾರವನ್ನರಿತ ಧೀಶಾಲಿ. ಪರಲೋಕದಲ್ಲಿ ಅನರ್ಥಕಾರಕವಾದ ಈ ವ್ಯಾಪಾರದಿಂದ ತನ್ನ ತಂದೆಯನ್ನು ನಿವೃತ್ತಗೊಳಿಸಬೇಕೆಂದು ಬುದ್ಧಿವಂತಿಕೆಯಿಂದ ಮಾತನಾಡಿದ.

**ವೇದೇಶೀಯವಿಶೇಷ–** ''ಅನಂದ'' ಎಂಬ ಶಬ್ದಕ್ಕೆ ''ನಿತ್ಯದುಃಖಸ್ವರೂಪತ್ವಾದನಂದಂ ತತ್ತಮೋ ಮತಮ್'' ನಿತ್ಯವೂ ದುಃಖವಿರುತ್ತದೆಯಾದ್ದರಿಂದ ''ಅನಂದ'' ಎಂದರೆ ''ತಮಸ್ಸು'' ಎಂದು ಅರ್ಥವನ್ನು ಶ್ರೀಮದಾಚಾರ್ಯರು ಹೇಳಿದ್ದಾರೆ. ಪ್ರಕೃತ ಅಸಮರ್ಥವಾದ ಈ ರೀತಿಯಾದ ಗೋಗಳನ್ನು ದಾನಮಾಡುವುದರಿಂದ ಅನಂದಲೋಕವು ಅರ್ಥಾತ್ ತಮಸ್ಸು ಆಗುತ್ತದೆಂದು ಹೇಳಿದಂತಾಗುತ್ತದೆ. ಇಷ್ಟು ಸಣ್ಣದಾದ ವಿಕರ್ಮದಿಂದ ತಮಸ್ಸಾಗುವುದೇ ? ಎಂಬ ಪ್ರಶ್ನೆಯು ಇಲ್ಲಿ ಬರುತ್ತದೆ. ನಿಜ. ತಮೋಯೋಗ್ಯನಾದವನು ಈ ರೀತಿಯಾದ ಗೋಗಳನ್ನು ದಾನಮಾಡುತ್ತಿದ್ದರೆ ಅವನಿಗೆ ಈ ದಾನ ತಮಸ್ಸಾಧನವಾಗುತ್ತದೆ. ಇತರರಿಗೆ ಅನಿತ್ಯವಾದ ನರಕಕ್ಕೆ ಈ ದಾನವು ಸಾಧನವಾಗುತ್ತದೆ ಎಂದು ತಿಳಿಯಬೇಕು. ಹೀಗಾಗಿ ಪ್ರಕೃತ ''ಅನಂದ'' ಎಂಬ ಶಬ್ದಕ್ಕೆ ''ತಮಸ್ಸು'' ಮತ್ತು ''ಅನಿತ್ಯನರಕ'' ಎಂಬ ಎರಡು ಅರ್ಥಗಳನ್ನು ತಿಳಿಯಬೇಕು.

**ಸ ಹೋವಾಚ ಪಿತರಂ ತಾತ ಕಸ್ಮೈ ಮಾಂ ದಾಸ್ಯಸೀತಿ ದ್ವಿತೀಯಂ ತೃತೀಯಮ್ । ತಂ ಹೋವಾಚ ಮೃತ್ಯವೇ ತ್ವಾ ದದಾನೀತಿ ॥೧.೧.೪॥**

ನಿಷಿದ್ಧವಾದ ದಾನವನ್ನು ತಂದೆ ಮಾಡುತ್ತಿದ್ದಾನೆ. ಅದನ್ನು ನಿವಾರಿಸುವದು ಹೇಗೆ. ನಚಿಕೇತ ಬಹಳಸೂಕ್ಷ್ಮವಾದ ಧರ್ಮಗಳನ್ನು ತಿಳಿದವನು. ತಂದೆ ಮಾಡುತ್ತಿರುವ ಈ ಕರ್ಮವನ್ನು ಸಹಿಸಲಿಲ್ಲ. ಶಾಸ್ತ್ರವನ್ನು ಮೀರದೇ, ಸಹನೆಯನ್ನು ಕಳೆದುಕೊಳ್ಳದೇ ಸೂಕ್ಷ್ಮವಾಗಿ ತಂದೆಗೆ ಕೇಳಿದ.

''ನನ್ನನ್ನು ದಾನ ಮಾಡಿದರೂ ಪರವಾಗಿಲ್ಲ, ನೀನು ಇಂತಹ ದಾನವನ್ನು ಮಾಡಬಾರದು'' ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ ಅಪ್ಪನಿಗೆ ಕೇಳಿದ.

''ಅಪ್ಪಾ ! ನೀನು ಎಲ್ಲವನ್ನೂ ದಾನಮಾಡುತ್ತಲಿದ್ದಿ. ನನ್ನನ್ನು ಯಾರಿಗೆ ದಾನನೀಡುವಿ'' ಎಂದು. ಅಪ್ಪನಿಗೆ ಈ ಮಾತಿನ ಹಿಂದಿರುವ ಅಭಿಪ್ರಾಯ ಗೊತ್ತಾಗಲಿಲ್ಲ. ಒಂದು ಅಭಿಪ್ರಾಯವನ್ನು ಇಟ್ಟುಕೊಂಡು ಮಾತನಾಡುವ ಪ್ರಾಯ ಅವನದ್ದಲ್ಲ. ಹೀಗಾಗಿ ಇದು ಬಾಲಭಾಷಿತ ಎಂತು ತಿಳಿದ. ಸುಮ್ಮನಾದ.

ನಚಿಕೇತ ಸುಮ್ಮನಾಗಲಿಲ್ಲ. ಎರಡನೆಯ ಬಾರಿ ಮತ್ತೆ ಕೇಳಿದ "ಅಪ್ಪಾ! ನನ್ನನ್ನು ಯಾರಿಗೆ ದಾನಮಾಡುತ್ತೀ" ಅಪ್ಪ ಮತ್ತೆ ಬಾಲಕನ ಭಾಷಿತವೆಂದು ತಿಳಿದು ಸುಮ್ಮನಾದ. ನಚಿಕೇತನೂ ಬಿಡಲಿಲ್ಲ. ಮೂರನೆಯ ಬಾರಿ ಮತ್ತೆ ಕೇಳಿದ. "ಅಪ್ಪಾ! ನನ್ನನ್ನು ಯಾರಿಗೆ ದಾನಮಾಡುತ್ತೀ"

ಇದನ್ನು ಕೇಳಿದ ತಂದೆ ವಿಚಾರಿಸಿದ. ಇದು ಬಾಲಕನ ಸ್ವಭಾವವಲ್ಲ. ಕಿಂತು ಇದರ ಹಿಂದೆ ಹಠವಿದೆ ಎಂದು ತಿಳಿದ. ಸಹಿಸಲಿಲ್ಲ. ಮಗನಾದರೂ, ಗುಣಸಂಪನ್ನನಾಗಿದ್ದರೂ ತನಗೆ ಒಳಿತನ್ನು ಬಯಸುತ್ತಿದ್ದರೂ ಮಗನಿಗೆ ಶಾಪನೀಡಿದ. "ನೀನು ಸತ್ತುಹೋಗು" ಈ ರೀತಿಯಾಗಿ ನಚಿಕೇತನಂತಹ ಮಗನ ವಿಷಯದಲ್ಲಿ ಶಾಪ ನೀಡಿದ್ದು ಇದು ಆಶ್ಚರ್ಯ.

ವೇದೇಶೀಯವಿಶೇಷ- ತಂದೆಯ ಶಾಪ ಇಲ್ಲಿಗೆ ಮುಗಿಯಲಿಲ್ಲ. ಆ ಶಾಪದ ವಿವರವನ್ನು "ತೈತ್ತಿರೀಯಬ್ರಾಹ್ಮಣ" ನೀಡುತ್ತದೆ. ವೇದೇಶತೀರ್ಥರು ಆ ಶಾಖೆಯನ್ನು ಉಲ್ಲೇಖಿಸುತ್ತಾರೆ. ಮಗನನ್ನು ಯಮನಿಗೆ ನೀಡಿದ ವಿಚಾರವಿಷ್ಟು ಪ್ರಕೃತ ಬಂದಿದೆ. ಅರ್ಥಾತ್ ಮೃತನಾಗು ಎಂದು ಆ ಶಾಪದ ಅರ್ಥ. ಆದರೆ ಮೃತರಾದವರೆಲ್ಲ ಯಮನ ಮನೆಗೆ ಹೋಗುವದಿಲ್ಲ. ನೀನು ಯಮನ ಮನೆಗೆ ಹೋಗು ಎಂದು ಆ ಶಾಪದ ಅಭಿಪ್ರಾಯವೆಂಬುದಾಗಿ ಶಾಖಾಂತರ ಸ್ಪಷ್ಟಪಡಿಸುತ್ತದೆ. ಇಷ್ಟೆ ಅಲ್ಲ, ಪ್ರವಾಸಕ್ಕೆ ತೆರಳಿದ ಯಮನ ಮನೆಗೆ ನೀನು ಹೋಗು. ಯಜಮಾನ ಇಲ್ಲದಿದ್ದುದರಿಂದ ಮೂರುದಿನ ನೀನು ಉಪವಾಸದಿಂದ ಇರಬೇಕಾಗುತ್ತದೆ. ದೇಶಾಂತರದಿಂದ ಬಂದಮೇಲೆ ಯಮದೇವರು ಕೇಳುತ್ತಾರೆ. "ಕುಮಾರ ಎಷ್ಟು ದಿವಸ ನೀನು ನನ್ನ ಮನೆಯಲ್ಲಿ ವಾಸವಾಗಿದ್ದಿ" ಎಂದು. "ಮೂರು ದಿನ" ಎಂದು ನೀನು ಹೇಳುತ್ತಿ. "ಮೊದಲನೆಯ ದಿನ ಏನನ್ನು ಸ್ವೀಕರಿಸಿದಿ" ಎಂದು ಯಮದೇವರು ಕೇಳುತ್ತಾರೆ. "ನಿನ್ನ ಪ್ರಜೆಗಳನ್ನು ಭೋಜನ ಮಾಡಿದೆ" ಎಂದು ನೀನು ಹೇಳುತ್ತಿ. "ಎರಡನೆಯ ರಾತ್ರಿ ಏನು ಸ್ವೀಕರಿಸಿದೆ" ಎನಲು "ನಿನ್ನ ಪಶುಗಳನ್ನು ಸ್ವೀಕರಿಸಿದೆ ಎಂದು ಹೇಳುತ್ತಿ" "ಮೂರನೆಯ ರಾತ್ರಿ ಏನು ಸ್ವೀಕರಿಸಿದೆ" ಎಂದು ಕೇಳುತ್ತಾರೆ. "ನಿನ್ನ ಸಾಧುಕೃತ್ಯಗಳನ್ನು ಸ್ವೀಕರಿಸಿದೆ" ಎಂದು ಹೇಳುತ್ತಿ. ಇದಿಷ್ಟು ಶಾಪದ ವಿಸ್ತಾರ. ಇದನ್ನು ತಿಳಿಸುವ ತೈತ್ತರೀಯಬ್ರಾಹ್ಮಣದಲ್ಲಿಯ ವಚನಗಳು ಈ ರೀತಿಯಾಗಿವೆ.

ಮೃತ್ವಾ ಮೃತ್ಯೋಃ ಗೃಹಾನ್ ಗಚ್ಛ । ತದಾಽಪಿ ಪ್ರವಸಂತಂ ಮೃತ್ಯುಂ ಪ್ರತಿ ಗಂತಾಽಸಿ । ತಸ್ಯ ಗೃಹೇ ತಿಸ್ರೋ ರಾತ್ರೀಃ ಅನಶ್ನನ್ನೇವ ವಸತಾತ್ । ಸ ದೇಶಾಂತರಾದಾಗತೋ ಯಮಃ ಯದಿ ತ್ವಾ ಪೃಚ್ಛೇತ್ ಕುಮಾರ ಕತಿ ರಾತ್ರೀರವಾತ್ಸೀರಿತಿ ತದಾ ತಿಸ್ರ ಇತಿ ಪ್ರತಿಬ್ರೂತಾತ್ । ಕಿಂ ಪ್ರಥಮರಾತ್ರಾವಶ್ನಾ ಇತಿ ಯದಿ ಪೃಚ್ಛೇತ್ ತದಾ ತೇ ಪ್ರಜಾಮಿತಿ ಪ್ರತಿಬ್ರೂತಾತ್ । ಕಿಂ ದ್ವಿತೀಯರಾತ್ರಾವಾಶ್ನಾ ಇತಿ ಪೃಚ್ಛೇತ್ ತದಾ ಪಶೂಂಸ್ತ ಇತಿ ಪ್ರತಿಬ್ರೂತಾತ್ । ಕಿಂ ತೃತೀಯರಾತ್ರಾವಾಶ್ನಾ ಇತಿ ಪೃಚ್ಛೇತ್ ಸಾಧುಕೃತ್ಯಾಂ ತ ಇತಿ ಪ್ರತಿಬ್ರೂತಾತ್ ಇತಿ ॥

**ಬಹೂನಾಮೇಮಿ ಪ್ರಥಮೋ ಬಹೂನಾಮೇಮಿ ಮಧ್ಯಮಃ ।**
**ಕಿಂಸ್ವಿದ್ ಯಮಸ್ಯ ಕರ್ತವ್ಯಂ ಯನ್ಮಯಾದ್ಯ ಕರಿಷ್ಯತಿ ॥೧.೧.೫॥**

ನಚಿಕೇತ ಆಲೋಚಿಸುತ್ತಿದ್ದಾನೆ. ಅಪ್ಪ ನನಗೆ ನೀಡಿದ ಶಾಪ ಹೊಸದಾದದ್ದೇನೂ ಅಲ್ಲ. ಸರ್ವಜೀವರಾಶಿಗಳು ಯಾವುದನ್ನು ತಪ್ಪಿಸಿಕೊಳ್ಳಲು ಆಗುವದಿಲ್ಲವೋ ಅಂತಹ ಮರಣವನ್ನು ನನಗೆ ಶಾಪವಾಗಿ ನೀಡಿದ್ದಾನೆ. ಮುಂದೆ ಮೃತರಾಗುವ ಅನೇಕ ಜನರಿಗೆ ಮೊದಲಿಗನಾಗಿ ನಾನು ಮೃತನಾಗುತ್ತೇನೆ. ಹಿಂದೆ ಎಷ್ಟೋ ಜನ ಮೃತರಾಗಿದ್ದಾರೆ. ಮುಂದೆ ಎಷ್ಟೋ ಜನ ಮೃತರಾಗುತ್ತಾರೆ. ಅವರಿಗೆಲ್ಲ ನಾನು ಮಧ್ಯಸ್ಥನಾಗಿದ್ದೇನೆ. ನನ್ನಿಂದ ಯಮನಿಗೆ ಯಾವುದೇ ತರಹದ ಪ್ರಯೋಜನವಿಲ್ಲ. ಯಮನ ಯಾವ ಕೆಲಸಗಳನ್ನು ಮಾಡುವ ಯೋಗ್ಯತೆಯೂ ನನಗಿಲ್ಲ. ಯಮನ ಕೆಲಸಮಾಡುವುದಕ್ಕೂ ವ್ಯಕ್ತಿಗಳು ನಿಯತರಾಗಿಯೆ ಇರುತ್ತಾರೆ. ನಮ್ಮಂಥವರಿಂದ ಯಮನಿಗೆ ಆಗಬೇಕಾದ ಕೆಲಸ ಯಾವುದೂ ಇಲ್ಲ. ನನ್ನಿಂದ ಯಮನಿಗೆ ಪ್ರಯೋಜನವೇನೂ ಇಲ್ಲವೆಂದು ನನಗೆ ದುಃಖವೆ ಹೊರತು "ಸತ್ತುಹೋಗು" ಎಂದು ಶಾಪ ಕೊಟ್ಟದ್ದಕ್ಕಾಗಿಯಾವುದೇ ರೀತಿಯಾದ ದುಃಖವಿರುವುದಿಲ್ಲ.

**ಅನುಪಶ್ಯ ಯಥಾ ಪೂರ್ವೇ ಪ್ರತಿಪಶ್ಯ ತಥಾಪರೇ ।**
**ಸಸ್ಯಮಿವ ಮರ್ತ್ಯಃ ಪಚ್ಯತೇ ಸಸ್ಯಮಿವ ಜಾಯತೇ ಪುನಃ ॥೧.೧.೬॥**

ಶರೀರವನ್ನು ಪಡೆದವರಿಗೆ ಮರಣ ನಿಶ್ಚಿತ. ಈ ವಿಷಯದಲ್ಲಿ ನಚಿಕೇತ ಹೇಳಿದ ದೃಷ್ಟಾಂತವನ್ನು ವೇದಪುರುಷ ಅನುವಾದ ಮಾಡುತ್ತಾನೆ.

ಹೇ ತಂದೆಯೆ ! ನೀನು ಪೂರ್ವದಲ್ಲಿ ಮೃತರಾಗಿರುವ ಜೀವರನ್ನು ನೋಡು. ಪೂರ್ವದಲ್ಲಿರುವ ಜನ ಮೃತರಾದ ಮಾತ್ರಕ್ಕೆ ಮುಂದೆ ಇರುವ ಜನರಿಗೆ ಮೃತಿ ಯಾಕೆ ಬರಬೇಕು ಎಂದು ಶಂಕಿಸಬೇಡ. ಹೇಗೆ ಶರೀರಿಗಳಾಗಿದ್ದರಿಂದ ಹಿಂದಿನವರೆಲ್ಲರೂ ಮೃತರಾಗಿದ್ದಾರೆಯೋ ಹಾಗೆಯೆ ಮುಂದಿನವರು ಕೂಡಾ ಮೃತರಾಗುತ್ತಾರೆಂದು ನಿರ್ಧಾರಪೂರ್ವಕವಾಗಿ ತಿಳಿ. ಕಾಲ ಬಂದಾಗ ಸಸ್ಯವು ಪರಿಪಕ್ವವಾಗುತ್ತದೆ. ನಂತರ ಜೀರ್ಣವಾಗುತ್ತದೆ. ಹಾಗೆ ಕಾಲ ಬಂದಾಗ ಸಸ್ಯದಂತೆ ಮನುಷ್ಯ ಜರಾದಿಗಳಿಂದ ಪರಿಪಕ್ವನಾಗುತ್ತಾನೆ. ನಂತರ ಮೃತನಾಗುತ್ತಾನೆ. ಯಮಲೋಕಕ್ಕೆ ತೆರಳಿ ಅಲ್ಲಿ ತನ್ನ ಕರ್ಮಕ್ಕೆ ಅನುಗುಣವಾಗಿ ಶಿಕ್ಷೆಯನ್ನು ಅನುಭವಿಸಿದ ಮೇಲೆ ಪಾಪಶೇಷಕ್ಕೆ ಅನುಗುಣವಾಗಿ ಮತ್ತೆ ಜನಿಸುತ್ತಾನೆ. ಈ ವಿಷಯದಲ್ಲಿ ನನಗೆ ಸರ್ವಥಾ ದುಃಖವಿಲ್ಲ.

(ಮೃತನಾದ ಜೀವನನ್ನು ಕುರಿತು ಯಮಭಟರು ಹೇಳುವ ವಚನವಿದಾಗಿದೆ ಎಂಬುದಾಗಿ ವಾಮನಪಂಡಿತರು ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾರೆ.)

